श्रीमधुसूदनग्रन्थमालायां प्रथमस्तबके द्वितीयं प्रसूनम् —

जयपुर-राजकीय-पण्डितसभाप्रमुख-महामहोपदेशक-
मधुसूदन विद्यावाचस्पतिना प्रणीते वैदिकविज्ञान-
प्रकाशके ब्रह्मविज्ञानशास्त्रे द्वादशवादात्मके
द्वितीयवादग्रन्थोऽयमेकत्रिंशत्यधिकरणः

# सदसद्वादः

यत्र प्रदर्श्या विषयाः पुरातना यत्र प्रकारोऽभिनवः प्रदर्शितः ।
यत्र प्रमाणं श्रुतयः सयुक्तयस्तद् ब्रह्मविज्ञानमिदं विमृश्यताम् ॥

वैदिकमहामहर्षिविज्ञानपर्वतप्रतिपादितातिगहन-
विज्ञानाटवीमार्गप्रवेशहेतुभूतेश्वराज्ञापत्ररूपाः,
ब्रह्मविज्ञानशास्त्रसंबन्धिनो द्वादश ग्रन्था:—

१-विज्ञानविद्युत्तवादः, २-सदसद्वादः, ३-रजोवादः, ४-व्योमवादः,
५-अपरवादः, ६-आवरणवादः, ७-अम्भोवादः, ८-अमृतमृत्यु-
वादः, ९-अहोरात्रवादः, १०-दैववादः, ११-संशयोच्छेदवादः,
१२-सिद्धान्तवादः ।

तेष्वयं द्वितीयः सदसद्वादग्रन्थः श्रीमदार्यादत्तठक्कुरेण सम्पाद्य
केसरीदाससेठप्रबन्धेन, लक्ष्मणपुरे नवलकिशोर-
मुद्रणयन्त्रालये मुद्रयित्वा प्रकाशितः ।

प्रथमावृत्तिः ] [ सन् १९२९ ई०

श्रीः ।

# सदसद्वादो ब्रह्मविज्ञानम् ।

## ब्रह्मविज्ञानशास्त्रे सदसद्वादपरिच्छेदः ।

---

सदसद्वादे सप्त॰विमर्शा॰स्त्रिविकल्पाः—( ६५२ )—

| | | | |
|---|---|---|---|
| १ | प्रत्यय— | विमर्शः = सद्वादः, असद्वादः, सदसद्वादः । | श्लोकाः २५० |
| २ | प्रकृति— | विमर्शः = असद्वादः, सद्वादः, सदसद्वादः । | ११७ |
| ३ | तादात्म्य— | विमर्शः = सदसद्वादः, असद्वादः, सद्वादः । | ·६३ |
| ४ | अभिकार्य्य- | विमर्शः = असद्वादः, सद्वादः, सदसद्वादः । | ·४८ |
| ५ | गुण— | विमर्शः = असद्वादः, सद्वादः, सदसद्वादः । | १३२ |
| ६ | सामञ्जस्य- | विमर्शः = असद्वादः, सद्वादः, सदसद्वादः । | ·१९ |
| ७ | अक्षर— | विमर्शः = असद्वादः, सद्वादः, सदसद्वादः । | ·२३ |
| | | | ६५२ |

| | | | |
|---|---|---|---|
| १ प्रत्ययविमर्शे— | नित्यविज्ञानाद्वैतसिद्धान्तः | १५२ | ब्राह्मण मतम् |
| | क्षणिकविज्ञानाद्वैतसिद्धान्तः | ·५४ | श्रमणमतम् |
| | आनन्दविज्ञानाद्वैतसिद्धान्तः | ·४९ | मध्यस्थमतम् |
| २ प्रकृतिविमर्शे— | कर्म्माद्वैतसिद्धान्तः | ·३३ | वैनाशिकमतम् |
| | ब्रह्माद्वैतसिद्धान्तः | ·५७ | अविनाशिमतम् |
| | द्वैताद्वैतसिद्धान्तः | ·२५ | वैनाशिकवदविनाशिमतम् |
| ३ तादात्म्यविमर्शे— | भिन्नाभिन्नत्वसिद्धान्तः | ·११ | धर्म्मधर्म्मिणोर्बलरसयोरभेदवादः |
| | बलसारत्वसिद्धान्तः | ·१६ | बलप्राधान्यवादः |
| | रससारत्वसिद्धान्तः | ·३६ | रसप्राधान्यवादः |
| ४ अभिकार्यविमर्शे- | असत्कार्य्यवादः | ·१६ | वैशेषिकमतम् |
| | सत्कार्यवादः | ·१३ | प्राधानिकमतम् |
| | मिथ्याकार्य्यवादः | ·१९ | शारीरकमतम् |
| ५ गुणविमर्शे— | असन्मूलासृष्टिः | ·७० | प्राणमूलकसृष्टिवादः |
| | सन्मूलासृष्टिः | ·२५ | वाङ्मूलकसृष्टिवादः |
| | सदसदैकात्म्यमूलासृष्टिः | ·३७ | मनोमूलकसृष्टिवादः |
| ६ सामंजस्यविमर्शे- | प्रागभावसमुच्चितकारणवादः | · ३ | अभावपूर्वकभावोत्पत्तिसिद्धान्तः |
| | संभूतिविनाशवादः | · ६ | उत्पत्तिविनाशप्रवाहसिद्धान्तः |
| | विद्याविद्यावादः | १० | सर्वजगदभावात्मकभावमूलकसृष्टिः |
| ७ अक्षरविमर्शे— | सौगतमतम् | · ३ | सृष्टिबीजस्याक्षरस्याव्यक्तबलरूपत्वम् |
| | कापिलमतम् | · ५ | सृष्टिबीजस्याक्षरस्यजडप्रधानरूपत्वम् |
| | बादरायणमतम् | ·१० | सृष्टिबीजस्याक्षरस्यचेतनपुरुषरूपत्वम् |
| | उपसंहारः | · ५ | |

ओः ।

# अथ ब्रह्मविज्ञानशास्त्रे द्वादशवादे द्वितीयः—सदसद्वादः प्रारभ्यते ।

---

प्रत्यय एवं प्रकृतिश्चैकात्म्यं चाभिकार्य्यं च ।
स्वगुणाः सामञ्जस्यं चाक्षर इति सप्तधा विमर्शाः स्युः ॥ १ ॥
प्रत्येकमेषु सन्ति त्रयो विकल्पा असच्च सत् सदसत् ।
तेनाय मेकविंशी सदसद्वादो निरूप्यते सम्यक् ॥ २ ॥

---

## ( असद्वादे वेदवचनानि । )

१ "देवानां पूर्व्ये युगेऽसतः सदजायत ।"
२ "देवानां युगे प्रथमेऽसतः सदजायत ।" } ( ऋ. सं. १०।७२ )
३ "तम आसीत् तमसा गूढमग्रे ।" ( ऋ. सं. १०।१२९।३ )
४ "असदेवेदमग्र आसीत् । असतः सदजायत ।" ( तै. )
५ { "असद्वा इदमग्र आसीत् । ततो वै सदजायत ।
तदात्मानं स्वयमकुरुत । तस्मात् सुकृत मुच्यते ।" } ( तैति. उप. २।७ )
६ { "इदं वा अग्रे नैव किञ्चनासीत् । न द्यौ रासीत्
पृथ्वी नान्तरिक्षम् तदसदेव सन्मनोऽकुरुत—स्यामिति॥" } (तै. ब्रा. २।२।६)
७ "असतोऽधि मनोऽसृज्यत । मनः प्रजापतिमसृजत ॥" ( तै. ब्रा. २।२।६ )
८ "नैवेह किञ्चनाग्र आसीत् । मृत्युनैवेदमावृतमासीदशनायया । अशनाया हि मृत्युः । तन्मनोऽकुरुत—आत्मन्वी स्यामिति ।" ( शत. १०।४।८ )

## ( सद्वादे वेदवचनानि । )

१ "यो नः पिता जनिता यो विधाता यो नः सतोऽभ्या सज्जजान ।"
( तै. सं. ४।६।२।३ )

२ "सदेवेदमग्र आसीत् । कथं त्वसतः सज्जायेतेति ।"
( ताण्ड्य. ब्रा. उप. ६।२ )

३ "असन्नेव स भवति असद्ब्रह्मेति वेद चेत् ।
अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः" ॥ १ ॥ ( तैत्ति. उप. २।६ )

## ( सदसद्वादे वेदवचनानि । )

१ "नैव वा इदमग्रेऽसदासीत्—नैव सदासीत् । आसीदिव वा इदमग्रे

नेवासीत् । तस्मादेतदृषिणाऽभ्यनूक्तम्—नासदीसो सदासीत् तदानी-
मिति ।" ( शत. १०।४।१ )

२ "असदेवेदमग्र आसीत् । तत् सदासीत् । तत् समभवत् । तदाण्डं
निरवर्तत ।" ( ताण्ड्य. छां. उप. खं. १६ )

३ "असद्वा इदमग्र आसीत् । किं तदसदासीदिति । ऋषयो वाव तेऽग्रे
असदासीदिति ।" ( शत. ६।१।१ )

## ( सदसद्योनि ब्रह्मवादे वेदवचनम् । )

"ब्रह्मजज्ञानं प्रथमं पुरस्ताद् विसीमतः सुरुचो वेन आवः ।
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनि मसतश्च विवः" ॥ १ ॥

यजुः संहिता—१३।३।
सामसंहिता ( पू. )—४।१।३।६॥
अथर्व संहिता —४।१।१॥—१

इत्थं सदसत् सदसत् सृष्ट्यारम्भणमिति श्रुतौ त्रीणि ।
सन्ति मतानि विमर्शास्तेषां सप्ताधिकरणाः स्युः ॥ १ ॥

# ब्रह्मविज्ञानशास्त्रम् ।

तत्रायं सदसद्वादो नाम द्वितीयो वादस्त्रिपक्षीसंग्रहरूपः प्रस्तूयते ।

## तस्येयं विषयसूची ।

त्रय विमर्शाः । प्रति विमर्शं त्रीणि अधिकरणानि । प्रत्यधिकरणं सूत्राणि ।

१ प्रथमे प्रत्ययाद्वैतविमर्शे—

१—नित्यविज्ञानवादो ब्राह्मणमतम्, प्रथमाधिकरणम्, सद्वादः ॥ १ ॥

( १ ) त्रिपुटी प्रसङ्गे रसमयैकत्वम्
,, दृश्यपृथक्त्वम्
,, वैज्ञानिकत्वम्

( २ ) षडुपाधिप्रसङ्गे चतुरायतनानि

( ३ ) विज्ञानात्मनः सप्तावस्थाः

( ४ ) षड् भावनाप्रसङ्गे सत्ता–१
,, चेतना–२
,, आनन्दः–३
,, कर्म–४
,, नाम–५
,, रूपम्–६

( ५ ) ……………… अमृतसत्यम्
अभ्वम्
प्रत्ययः

२—क्षणिकविज्ञानवादः श्रमणमतम्, द्वितीयाधिकरणम्, असद्वादः ॥ २ ॥

( १ ) आर्य्यसत्यचतुष्टयम्

( २ ) दुःखविवेकः
रूपस्कन्धः
संज्ञास्कन्धः
संस्कारस्कन्धः
विज्ञानस्कन्धः=( आत्मात्मीयसम्बन्धाः )
वेदनास्कन्धः

## ६—षष्ठे सामञ्जस्य विमर्शे—



## ७—सप्तमे अव्यक्तविमर्शे—

तत्राद्यौ प्रत्ययाद्वैतविमर्शे त्रिविकल्पे—

# नित्यविज्ञानवादः । ( सद्वादः )

---

## त्रिपुटीप्रसङ्गे द्रष्टृदृश्यप्रत्ययानामेकतासूत्रम् ।

( १ ) सूक्ष्मेक्षिकादक्षविचक्षणा ये ते ब्राह्मणा ब्रह्मविदो वदन्ति ।
अखण्डविज्ञानमयं यथैकं ब्रह्मैव सर्वं जगदेतदस्ति ॥ १ ॥
पश्यामि विश्वं मम दर्शनेऽस्मिन् द्रष्टा च दृश्यं च पृथग् विभाति ।
द्रष्टान्तरः कश्चिदभिन्न एको दृश्यानि भूयांसि बहिःस्थितानि ॥ २ ॥
द्रष्टा प्रमाता विषयी तदर्थो ज्ञाता च ग्रहीतेति न भिद्यतेऽर्थः ।
दृश्यं प्रमेयं विषयोऽतदर्थो ज्ञेयं च कर्मेति न भिद्यतेऽर्थः ॥ ३ ॥
द्रष्टा च दृश्यं च तयोश्च दृष्टौ समन्वयः प्रत्यय एष उक्तः ।
स द्रष्टृसारो न हि तत्र दृश्यं द्रष्टुः पृथक् संभवति स्वतन्त्रम् ॥ ४ ॥
द्रष्टा हि विज्ञानमयोऽत्र भागः सत्तामयस्तत्र हि दृश्यभागः ।
द्रष्टुः पृथक्त्वं च यदस्ति भागे प्रतीतिमात्रं तदपीह मन्ये ॥ ५ ॥
पश्यामि तेन प्रतिपद्यतेऽर्थो यच्चेह लोके न तदस्ति वस्तु ।
यदप्रमाणं न तदस्ति तेनोपलब्धिरेवास्तिरिति प्रतीमः ॥ ६ ॥
तस्मान्न दृश्यं न च दृश्यसत्ता द्रष्टैव सर्वं न च दृष्टिरन्या ।
अस्तीति यत् त्वं प्रतिपद्यसे सा दृष्टिर्न दृष्टेरतिरिच्यतेऽस्ति ॥ ७ ॥

## त्रिपुटीप्रसङ्गे दृश्यपृथक्तासूत्रम् ।

( २ ) दृश्यं न चेदस्ति तदास्य केन द्रष्टुर्विभोः स्यादिह भिन्नभावः ।
द्रष्टा विभुः सर्वे इहैकचरस्यान्मृगा मनुष्या न पृथग् भवेयुः ॥ ८ ॥
यः प्रत्ययश्चैत्र इति प्रसिद्धः स एव मैत्रः स हि देवदत्तः ।
एकश्च विज्ञानपरश्च मूर्खः कथं भवेच्चैत्रपरोऽन्तरे स्यात् ॥ ९ ॥
यन्नास्ति तन्नोपलभे कृतेऽपि तस्योपलब्ध्यै बहुशः प्रयत्ने ।
यो दृश्यते सोऽपि न दृश्यतेऽर्थश्चेन्मुद्रिताक्षो न करोति दृष्टिम् ॥ १० ॥
उन्मीलिताक्षोऽपि न पश्यतीमानन्तर्हितार्थानथवा प्रसुप्तः ।
न सर्वदा दृष्टिरिहैकरूपा तस्माद्व्यवच्छेदकृदस्ति भिन्नः ॥ ११ ॥
दृश्यं न चेत्किञ्चिदिहाभविष्यज्ज्ञानं प्रमाणं न तदाऽभविष्यत् ।
द्रष्टैव दृश्यं यदि कल्प्यते चेद् भ्रमो विकल्पश्च भवेत्प्रमाणम् ॥ १२ ॥
भिन्ने तु दृश्ये सति तेन योगाज्जातोऽवबोधो भवति प्रमाणम् ।
तेनाप्रयुज्यैव तु जायमानं यज्ज्ञानमाभाति तदप्रमाणम् ॥ १३ ॥

## त्रिपुटीप्रसङ्गे वैज्ञानिकतासूत्रम् ।

(३)१ अत्रोच्यते स्वप्नवदत्र विद्यात् स्वप्ने हि विज्ञानमभिन्नमेकम् ।
द्रष्टाऽपि दृश्यान्यपि दृष्टयोऽपि प्रत्यक् पराक् चेत्यखिलं तदेव ॥ १४ ॥
२ अत्राह न स्वप्नवदस्ति चैत्रस्वप्नेऽपि चैत्रोऽपि पृथक् परेऽपि ।
ते चैत्रविज्ञानकृताः स्युरस्मिन् किं ज्ञानतः स्युर्यद जाग्रदर्थाः ॥ १५ ॥
कुतो न चैत्रस्य कुतो न मैत्रस्येदं विनिर्धारयितुं न शक्यम् ।
स्वप्नं प्रपश्याम्यहमित्थमेवं ममाऽभिमानोऽस्त्यथवा परस्य ॥ १६ ॥
स्वप्ने तु चैत्रस्य यथाह मैत्रो न वेत्ति तज्जाग्रति मैत्र एषः ।
तस्मादिह स्वप्नदृगेव वेत्ता स्वाप्नान्तिकास्ते न विदन्ति किञ्चित् ॥ १७ ॥
अथेह पश्यामि तु जाग्रतीमान् परस्परप्रत्ययकारिणो यत् ।
तस्माच्च न स्वप्नवदत्र जाग्रत्यमी जनाः केवलमानसाराः ॥ १८ ॥
३ अत्रोच्यते स्वप्नवदेव जाग्रत् स्वाप्नान्तिका एव च सर्वलोकाः ।
स्वप्नं प्रपश्यत्ययमत्र देवो द्रष्टा हि सर्वज्ञहिरण्यगर्भः ॥ १९ ॥
तत्स्वप्नलोका हि वयं यथेमे परस्परप्रत्ययमावहामः ।
तथैव मत्स्वप्नगता अपीमे जना मिथः प्रत्ययशालिनः स्युः ॥ २० ॥
स्वप्नेन चेत् प्रत्ययमावहेयुः कथं मिथस्तद्व्यवहारसिद्धिः ।
एको यथैवादिशतीह तद्वत् करोति सोऽन्यः प्रतिभाषते च ॥ २१ ॥
अन्ये हि मत्स्वप्नगतास्ततोऽन्ये जाग्रत्यमी प्रक्रममूलभेदात् ।
तस्माद्धि मत्स्वप्नगतं न चैते विदन्ति संप्रत्ययमन्यदेतत् ॥ २२ ॥
४ अथाह सर्वज्ञहिरण्यगर्भस्वप्नो हि विज्ञानमयप्रपञ्चः ।
ममापि विज्ञानमयप्रपञ्चः स्वप्नः कुतः स्यात्तु तयोर्विभेदः ॥ २३ ॥
५ अत्रोच्यते यद्वदिहा विशेषाद्वैज्ञानिकत्वेऽपि भवन्ति भेदाः ।
तद् द्रष्टृदृश्यादिकृतस्तथायं विज्ञानवैचित्र्यकृतो विशेषः ॥ २४ ॥
एतेन हि स्वप्नसमत्ववादे नैव प्रमाक्षेपकथाप्यपास्ता ।
भ्रमः प्रमाणं च विभिद्य यद्वत् स्वप्ने तथा जाग्रति संप्रतीयात् ॥ २५ ॥
ज्ञानं भवेद्वा तदिह प्रमाणं स्वार्थस्य यत्प्रापणकारि वीक्षे ।
ज्ञानस्थमर्थं यदि तुल्यमेष प्रत्येति संप्राप्तमिदं प्रमाणम् ॥ २६ ॥
तथा च सिद्धा भवति प्रमाणा प्रमाणविज्ञानपथव्यवस्था ।
दृश्यन्तु यत् प्रत्ययभिन्नदेशं नास्त्येव तत्राभ्युपगन्तुमर्हम् ॥ २७ ॥
तस्माद्ध्रुवं प्रत्ययमात्रसारा प्रष्टार एतेऽपि च दृश्यसंघाः ।
न प्रत्ययाः प्रत्ययितुः पृथक् स्युर्द्रष्टैव तस्माद्यमस्ति सर्वः ॥ २८ ॥

इति त्रिपुटीप्रसङ्गः ॥ १ ॥

## षडुपाधिविवेके चतुरायतनसूत्रम् ।

१. द्रष्टा निजान्यायतनानि कल्पते चत्वारि तेषां यद्वयो विभक्तः ।
आयान्त्यवच्छेदकतां च तान्यतस्तत्राक्षकूटस्थित एव भिद्यते ॥ १ ॥
ज्ञानेन्द्रियाणीह क्रियेन्द्रियाणि भूतानि धर्मा बहुभिः स्वभेदैः ।
तेष्विन्द्रियेषु प्रतिपद्य भुङ्क्ते ज्ञानक्रियाभ्यां विषयाननेकान् ॥ २ ॥

२ द्रष्टा स्वदृष्ट्या विषयानपीमान् सृष्ट्वा प्रविष्टः पुनरप्यदृष्टः ।
भुनक्ति सर्वांस्त इमे प्रियाः स्युः स्वस्मै स एतानखिलान् विधत्ते ॥ ३ ॥
पतिश्च जाया च सुताश्च वित्तं यद्ब्रह्म यत्क्षत्रमिमे च लोकाः ।
देवाश्च भूतानि च यच्च सर्वं ते ह्यात्मकामाय प्रिया न तेषाम् ॥ ४ ॥

३ श्रुत्या च दृष्ट्या मनसाऽन्यतो वा श्रव्यः सदृश्यः स स एव भाव्यः ।
शृणोमि पश्याम्यथ चिन्तयामि यन्निश्चिनोम्येव स एक आत्मा ॥ ५ ॥
द्रष्टव्यरूपाणि च दृष्टिरात्मा श्रोतव्यशब्दाः श्रुतिरेव आत्मा ।
मन्तव्यकामाश्च मनस्तथात्मा निदिध्यासितव्याश्च धियोऽपि चात्मा ॥ ६ ॥
श्रोत्रं च चक्षुश्च मनश्च बुद्धिस्तेषां तथार्था अखिलाः स आत्मा ।
द्रष्टैव सोऽक्षायतनेषु तिष्ठन् संतिष्ठतेऽर्थायतनेषु तेषु ॥ ७ ॥
तद्वित्थमस्यात्मन एव दृष्ट्या श्रुत्या च मत्या च विनिश्चयेन ।
भवेद्धि सर्वं विदितं यतोऽन्यत्र क्वापि पश्यामि न वा शृणोमि ॥ ८ ॥
यो ह्यात्मनोऽन्यत्र तु वेद ब्रह्म क्षत्रं च लोकानखिलांश्च देवान् ।
भूतानि सर्वं च तमस्य ते वै सर्वे पराकुर्न स तानगृह्णात् ॥ ९ ॥
यद्ब्रह्म यत्क्षत्रमिमे च लोका देवाश्च भूतानि च यच्च सर्वम् ।
स एष आत्मैव यथार्चिरेव ज्योतींषि तापाश्च रसाश्च धूमाः ॥ १० ॥
आहन्यमानस्य हि दुन्दुभेर्यथा बाह्यान्न शब्दान् ग्रहणाय शक्नुयात् ।
शब्दान् ग्रहीतुं तु सदुन्दुभिं हितं गृह्णाति तद्घातमनुष्यसंहितम् ॥ ११ ॥
आध्मायमानस्य यथास्य शंखस्यैतान् ग्रहीतुं क्रमते न शब्दान् ।
शब्दान् ग्रहीतुं तु स शंखमेवाक्रमेत शंखध्ममनुष्यसार्थम् ॥ १२ ॥

४ आर्द्रेऽन्धनेऽभ्याहितवह्नितो यथा धूमाः पृथग्भूय विनिश्चरन्ति ते ।
तथैव तस्मान्महतोऽपि वाङ्मयाः सर्वे पृथग्भूय विनिश्वसन्ति ते ॥ १३ ॥
वेदा हि चत्वार इमे पुराणेतिहासविद्योपनिषत् प्रपञ्चः ।
श्लोका विचारानुविचारभावाः सूत्राणि वा निश्वसितानि तस्य ॥ १४ ॥
द्रष्टा हि विज्ञानमयः स आत्मा यथा यथा पश्यति तद्वदस्मात् ।
तद्वाङ्मयं द्रष्टुरुदेति सर्वं प्रणोदयो वाङ्मयतः परेषाम् ॥ १५ ॥

५ एकायनान्येव बहूनि चात्मा प्रकल्प्य भूतान्यखिलानि धत्ते ।
अपां समुद्रोऽस्ति यथाऽखिलानामेकायनं तद्वदिमानि विद्यात् ॥ १६ ॥
स्पर्शस्य रूपस्य रसस्य गन्धस्यैवं हि शब्दस्य च कल्पनायाः ।
एकायनं त्वक्च दृशौ च जिह्वानासे च कर्णौ च मनः क्रमेण ॥ १७ ॥
वेदस्य गत्या अथ कर्मविद्याविसर्जनानां च रतेः क्रमेण

–वाक्पादपाणीन् हृदयं च पायूपस्थौ तथैकायनमेष धत्ते ॥ १८ ॥
६ जलोद्भवः सैन्धव खिल्य एष प्रास्तो जलेऽन्वेव विलीयते तत् ।
नास्योद्ग्रहाय प्रभवेद्यतोवाऽऽददीत तस्मिन् लवणं प्रतीयात् ॥ १९ ॥
एवं महद्भूतमिदं ह्यपारमनन्तविज्ञानघनोऽयमेभ्यः ।
भूतेभ्य उत्थाय विनश्यतीमान्येवानु स प्रेत्य तु नास्ति संज्ञा ॥ २० ॥
७ द्वैतं यदि स्यादितरस्तदेतरं पश्येज्जिघ्रेच्छृणुयाद्वदेच्च वा ।
मन्वीत विद्याच्च यदा तु सर्वमप्यात्मैव तस्यास्ति विजानतस्तदा ॥ २१ ॥
किं केन पश्येदथ किं विजिघ्रेत् किं वा वदेत् किं शृणुयाच्च किं वा ।
मन्वीत विद्यादपि किंतु को वा न द्रष्टृदृश्यादि पृथक्त्वसिद्धिः ॥ २२ ॥
इदं विजानाति हि येन सर्वं तं केन विज्ञातुमयं प्रभुः स्यात् ।
द्रष्टा हि दृश्या ननु पश्यतीमान् द्रष्टारमेनं वद कोनु पश्येत् ॥ २३ ॥

## आत्मनः सप्तावस्थत्वम् ।

अस्यात्मनः सप्त भवन्त्यवस्थाः प्रजागृतिस्वप्नसुषुप्तयो वा ।
संमोहमूर्च्छामृतिमुक्तयो वा ताभ्यो न चान्यत्र कदाचिदात्मा ॥ २४ ॥
संसारनिस्तारविभेदतस्तु स्यातामवस्थे अथवात्मनो द्वे ।
मुक्तिः स निस्तार इतः परास्ताः संसार एवास्ति षडप्यवस्थाः ॥ २५ ॥
या संसृतिः सा द्विविधास्ति देहं स्थूलं त्यजन्नेप तु मृत्यवस्थः ।
स स्थूलदेहस्थित एष पञ्चावस्थोऽपि सन् जीवदवस्थ उक्तः ॥ २६ ॥
स जीवितोऽपि द्विविधोऽस्ति जाग्रत् सुप्तः सुषुप्तः प्रकृतिस्थ एव ।
संमोहितो मूर्च्छित एष चात्मा रुग्णो विकारी, दुरवस्थ उक्तः ॥ २७ ॥
अपैति चैतन्यममुष्य मूर्च्छाङ्कितस्य निःश्वासनिवृत्तिरस्ति ।
मोहे तु पश्यन्नपि नैव पश्येन्मनः क्रियास्तम्भनतोऽस्त्यवेताः ॥ २८ ॥
इत्थं चतस्रोऽपि भवन्त्यवस्था न जीवितस्य क्वचनप्रकृत्या ।
तिस्रः प्रकृत्या तु भवन्त्यवस्था याः स्ता विशेषात्तु निरूपयामः ॥ २९ ॥

## जाग्रत्स्वप्नसुषुप्त्यवस्थाः ।

८ स्थानानि हि त्रीणि भवंति तावत् जाग्रत्सुषुप्तिश्च तयोश्च सान्ध्यम् ।
यदैष सर्वायतनप्रतिष्ठस्तज्जाग्रदुक्तं रमते स तेषु ॥ ३० ॥
यदैष सर्वायतनेषु योगं त्यक्त्वा स्वरूपस्थितमात्र एकः ।
सुषुप्तिरेषाऽथ तयोश्च सन्धौ स्वप्नस्तदित्थं त्रिविधा प्रतिष्ठा ॥ ३१ ॥
प्रजागरस्वप्नसुषुप्तयस्त्विमास्तिस्रोऽपि सार्कं प्रभवन्ति जाग्रति ।
स्वप्नः स चेद् द्वे भवतोऽप्रजागरे सुषुप्तिरद्वन्द्व सहाऽसहायिनी ॥ ३२ ॥
देहाद्बहिर्या विषयान् भुनक्ति यत् स जागरोऽयं बहिरिन्द्रियाश्रयः ।
आत्मा मनश्चेन्द्रियवर्ग इत्यमी त्रयोऽपि तस्मिन् प्रभवन्ति संहिताः ॥ ३३ ॥
स्वप्नः स चेदस्पृशतो बहिर्जगद् यद्ध्यायतोऽन्तः स्फुरतीह चिन्तया ।
आत्मा मनश्च द्वयमत्र संहितं स्याद्व्यापृतं खानि न चेशते बहिः ॥ ३४ ॥

अजाग्रतश्चिन्तयतः स्फुरन्त्यणून्येतानि रूपाणि बहिःस्थरूपवत् ।
चान्द्रे वपुर्ज्योतिषि मानसे यतस्तज्ज्योतिरा भाति निशीव तत्क्षणे ॥३५॥
बहिर्जगद्भासकतेजसाञ्जसा स्पृष्टं मनः स्यादभिभूतमप्रभम् ।
दिवेव चन्द्रस्तत एव जाग्रतो ध्यातार्थरूपं प्रतिभात्यनुल्बणम् ॥ ३६ ॥
स्वप्नेऽपि जाग्रत्यपि यत्र न स्फुटं किञ्चित्प्रपश्यत्यथ नानुचिन्तति ।
सार्थेन्द्रियं यत्र मनो न सज्जते निर्द्वन्द्व आत्मास्ति सुषुप्तिमाद्दताम् ॥३७॥
प्राणेषु विज्ञानमयोऽस्ति योऽन्तर्ज्योतिर्हृदि प्राणमयः स आत्मा ।
उभौ सलोकावनु संचरन् वै लेलायति ध्यायति वा यथेच्छम् ॥ ३८ ॥
कदाचिदेकान्तविहारशीलः कदाचिदुत्पन्नजगद्विहारी ।
स्वप्नान्तबुद्धान्तविहारशीलः प्राणन्नपानन्नुभयत्र याति ॥ ३९ ॥

## १——जाग्रदवस्था ।

९ जाग्रत्ययं बाह्यचरोऽस्ति पञ्च ज्योतीरवीन्द्वग्निभिरेव वाचा ।
तथात्मना व्यस्तसमस्तरूपैर्यथोपलब्धैरपि पश्यतीदम् ॥ ४० ॥

## २——स्वप्नावस्था ।

१० स्वप्ने तु सन्ध्ये स यदावतिष्ठते तदास्य लोकस्य हि सर्वतोऽव्ययम् ।
मात्रामपादाय स आत्मना सृजन् स्वज्योतिषा भासयते नवं नवम् ॥४१॥
न तत्र पन्था न रथा न योगा न पुष्करिण्यः सरितः सरांसि ।
सर्वं सृजत्येष यथेच्छमस्मिन् द्रष्टा स एवास्त्यखिलस्य कर्ता ॥ ४२ ॥

"स्वप्नान्त उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि ।
उतेव स्त्रीभिः सहमोदमानो जक्षदुतेवापि भयानि पश्यन्" ॥ ४३ ॥

( बृहदारण्यके )

आत्मानमावेश्य शरीरसंस्थां निर्मात्यनावेश्य तु भूतसंघान् ।
वैज्ञानिकी तत्र शरीरसंस्था संस्कारसिद्धा न तु भौतिकी सा ॥ ४४ ॥
द्रष्टा स आत्मा यदि संनिधत्ते न चेत्तदा किञ्चिदपीह न स्यात् ।
ध्रुवं स तेष्वस्ति निरिन्द्रियेषु सन्तीन्द्रियाण्यत्र विलक्षणानि ॥ ४५ ॥
सूक्ष्मेन्द्रियत्वात्तु निरिन्द्रियाणि भ्रमो न तेषां तदभाव एव ।
सर्वं हि भुङ्क्ते स्वपिति प्रयाति प्रबुध्यते श्लिष्यति भिन्नरीत्या ॥ ४६ ॥

## ३——सुषुप्त्यवस्था ।

११ अथो सुषुप्तः सहि लोकमेनं रूपाण्यतिक्रामति चात्र मृत्योः ।
कामं तदा कामयते न किंचिन्न पश्यति स्वप्नमयं च किंचित् ॥ ४७ ॥
प्राज्ञेन संश्लिष्टतमः स आत्मना विज्ञानमात्मा न विवेद किंचन ।
न वेद बाह्यं न तथान्तरं तदा शोकातिगं रूपमकाममस्य तत् ॥ ४८ ॥
विज्ञानमानन्दमयं दृढं श्रितः प्राज्ञः स आत्मा न विवेद तत्परम् ।
न वेद बाह्यं न तथान्तरं तदा शोकातिगं रूपमकाममस्य तत् ॥ ४९ ॥

पितुः पितृत्वं प्रसुवः प्रसूत्वं पुत्रस्य पुत्रत्वमपैति पुंस्त्वम् ।
पुंसः स्त्रियः स्त्रीत्वमथो पतित्वं पत्युर्वधूत्वं तदपैति वध्वाः ॥ ५० ॥
न ब्रह्मचारी न गृही यती वा न ब्राह्मणक्षत्रियवैश्यशूद्रः ।
न तापसो न श्रमणो न भिक्षुर्दीनो दरिद्रो न बली न राजा ॥ ५१ ॥
पुण्यैः स पापैः सकलैः सकामैर्नान्वागतः सन् विरजाः प्रसन्नः ।
शिवः स्वरूपे रमते तदानीं तीर्णः स सर्वान् हृदयस्य शोकान् ॥ ५२ ॥
द्रष्टा स पश्यन्नपि नैव पश्यति घ्राता स जिघ्रन्नपि नैव जिघ्रति ।
श्रोता स शृण्वन्नपि न शृणोत्ययं स्प्रष्टा स्पृशन्न स्पृशतीह किञ्चन ॥ ५३ ॥
न स्वादमानः स्वदते रसक्रियो नायं वदन् वा वदिता वदत्यपि ।
मन्ता स मन्वान इदं न मन्यते वेत्ता विदन्नैव विवेत्ति किञ्चन ॥ ५४ ॥
स्पर्शस्य दृष्टेर्वचसः श्रुतेर्वा घ्रातेर्मतेर्वा स्वदितेः प्रवित्तेः ।
न विद्यतेऽस्मिन् परिलुप्तिरस्या विनाशवृत्तेः समनित्यवृत्तेः ॥ ५५ ॥
किन्तु द्वितीयं न ततोऽस्ति किञ्चित् ततो विभक्तं यदयं प्रपश्येत् ।
ब्रूयात् स्पृशेद्वा शृणुयात्स्वदेत मन्वीत जिघ्रेदथवा प्रविद्यात् ॥ ५६ ॥
यत्रान्यवत् क्वापि भवेत् ततस्तन्मन्वीत विद्याच्छृणुयात्स्पृशेद्वा ।
ब्रूयात् प्रपश्येद्रसयेच्च जिघ्रेदद्वैतभावात् तु न वेद किञ्चित् ॥ ५७ ॥
सा संपदेषा परमा गतिर्नः स एव लोकः परमोऽखिलानाम् ।
आनन्दमात्रो हि स तस्य भूतान्यन्यानि जीवन्त्युपजीव्य मात्राम् ॥ ५८ ॥
राद्धः समृद्धोऽधिपतिर्बहूनां सर्वैश्च संपन्नतमोऽस्ति भोगैः ।
सानन्दमात्रा परमा मनुष्ये ततोऽपि देवेऽथ ततोऽप्यकामे ॥ ५९ ॥
स्वप्नान्तनिष्ठः स चिराय चेत् स्यात् तदा चिरायैव जडप्रपञ्चः ।
बुद्धान्तसामग्र्यतदिन्द्रियादेरस्फोटतस्तत्र न तत् प्रबोधः ॥ ६० ॥

## ४—मूर्छावस्था ।

१२ मूर्छास्ति भिन्नैव न जागरासौ ज्ञानाद्यभावादथ नैव सुप्तिः ।
अन्तर्जगत्सृष्टिसुदृष्ट्यभावान्नवासुषुप्तिः श्वसनाद्यभावात् ॥ ६१ ॥
नोत्क्रान्तिरेषा हृदयानुकम्पाद् स्कौष्ण्यसत्त्वाद्दविशीर्णगन्धात् ।
समुच्चिता सर्वविधात्ववस्थामूर्छाऽपरासामिह लिङ्गसत्त्वात् ॥ ६२ ॥

## ५—उत्क्रान्त्यवस्था ( मृत्युः ) ।

१३ स्वप्नान्तमित्थं ससुखं विहृत्य बुद्धान्तमायाति पुनर्विहर्तुम् ।
त्यजन् यथा नो विचरेत् तथाऽयं देहं त्यजन् प्राणयुतः प्रयाति ॥ ६३ ॥
यथा फलं बन्धनतः प्रमुच्यते तथाऽयमङ्गेभ्य इतः प्रमुच्यते ।
प्राज्ञात्मना प्राणमयेन संहितः प्राणाय चैवाद्रवतीह सेन्द्रियः ॥ ६४ ॥
अभ्याददानः सहि सर्वतेजो मात्रास्तदानीं हृदयैकनिष्ठः ।
प्राणैः सहैकोऽभवदुत्क्रमिष्यन् प्रद्योततेऽग्रं हृदयस्य तर्हि ॥ ६५ ॥
द्योतेन तेनैव सहैव आत्मा मूर्ध्नो विनिष्क्रामति चक्षुषो वा ।

शरीरदेशेभ्य वतेतरेभ्यः प्राणैश्च प्राणेन च प्रज्ञया च ॥ ६६ ॥
तृणान्तमागत्य जलायुका यथाऽन्यमाक्रमं चाक्रमते तथाऽयम् ।
निहत्य देहं गमयंस्तमोऽन्यथाऽऽक्रमं स आक्रामति संहरन् वपुः ॥ ६७ ॥
यथा हि पेशस्कृदमुष्य पेशसो मात्रां गृहीत्वा तनुते वपुर्नवम् ।
तथेदमाहत्य वपुः पुरातनं वपुर्नवं स्वं स करोति भौतिकम् ॥ ६८ ॥
स एष विज्ञानमयो मनोमयः प्राणैश्च भूतैरपि संहितोऽखिलैः ।
यथा चरत्येव यथा करोति वाऽसाधुः ससाधुश्च तथाभिजायते ॥ ६६ ॥
परे विदुः काममयः सपूरुषो यथाभिकामो भवतीह तत्क्रतुः ।
यथा क्रतुस्तत्कुरुते च कर्म सोऽभिकर्मसंपद्यत एव भूयसा ॥ ७० ॥

"सदेव सक्तः सहकर्मणैति लिङ्गं मनो यत्र निषक्तमस्य ।"
... ... ... ... ॥ ७१ ॥

"प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम् ।
तस्माल्लोकात् पुनरैति अस्मै लोकाय कर्मणे" ॥ ७२ ॥ ( बृहदारण्यके )

## ६---अनुत्क्रान्त्यवस्था ( मुक्तिः )

१४ इत्थं गतिः कामयमान आत्मा निष्काम आत्मा तु किमाक्रमेत ।
प्राणा न तस्योत्क्रमणाय वृत्ता ब्रह्मैव सन् ब्रह्म हि सोऽपि याति ॥ ७३ ॥
निष्काम आत्मा तु महानजोऽयं प्राणेषु विज्ञानमयो विशुद्धः ।
शेते हि सोऽन्तर्हृदयान्तकाशे वशीश्वरः सोऽधिपतिः समेषाम् ॥ ७४ ॥
न चैव भूयानिह साधुकर्मणा नवा कनीयांस्तदसाधुकर्मणा ।
सर्वेश्वरो भूतपतिः स एककः सेतुर्विलोकीधरणोऽस्त्यसंभिदे ॥ ७५ ॥

इति षडुपाधिप्रसङ्गः ॥ २ ॥

---

## षड्भावनाविवेके–सत्तासूत्रम् ।

१ विज्ञानजाः सन्ति षडत्र भावनाः सत्ता चिदानन्द इति त्रयी पृथक् ।
त्रयी पृथक् कर्म च रूपनामनी पूर्वा स्थिता द्रष्टरि दृश्यगा परा ॥ १ ॥
अस्तिर्हि सत्ता, यदि नास्तिरेषा, न स्यात्तदा द्रष्टरि दृश्यताधीः ।
या ग्राहकग्राह्यकृतद्विखण्डा संवित् तदुल्लासनिमित्तमस्तिः ॥ २ ॥
समस्तशक्तिप्रचयो हि सत्ता ताः शक्तयोऽत्र प्रतिभान्त्यनन्ताः ।
व्यूढासुशक्तिष्वथ कासुचिद्या संसृज्यते धीरिह सैव सत्ता ॥ ३ ॥
आसीत्तु यत्र प्रचये मृदस्तीत्येवं मतिस्तत्र हि शक्तयोऽन्याः ।
संसृज्य भिन्नं प्रचयं सृजन्तीत्येवं घटोऽस्तीति विकल्पयामि ॥ ४ ॥
अस्तीति पश्याम्युपलब्धिरस्तिः सास्तिः स्वरूपं विषयोपलब्धेः ।
द्रष्टा विभुः सास्तिरपीह विभ्वी सा निर्विशेषा च ततो न दृश्यम् ॥ ५ ॥

---

( १ ) सत्ता, चेतना, आनन्दः—कर्म्म, रूपं, नाम—इति षड् भावनाः ।

## चेतनासूत्रम् ।

२ एकं यदा क्रामति भिन्नभिन्नं घटादिमर्थं चिचिनक्ति शश्वत् ।
यस्मिन् विकल्पा विपयोपरागात् तन्निर्विकल्पं हृदये चिदाख्यम् ॥ ६ ॥
प्राज्ञोऽथ विज्ञानमिति द्विधा तत् प्राज्ञः स कामो विपयोपरक्तः ।
विज्ञानमन्यत्पुनरात्मकामं निष्काममेतत् तदसङ्गमिष्टम् ॥ ७ ॥
प्राज्ञः सकामः सहि सर्वकामो मुख्यं तु विज्ञानमकामरूपम् ।
प्राज्ञे प्रविष्टं सह तेन कामेष्वायात्यसङ्गं न तदेषु लिप्तम् ॥ ८ ॥
प्राज्ञस्त्वयं नित्यमनादिवासनावशेन कामव्यतिपक्तविग्रहः ।
उच्चावचैः संस्क्रियते स कामना क्रोधादिधर्मैर्ह्रसति प्रवर्धते ॥ ९ ॥
प्राज्ञो हि जीवः प्रतिपद्यते पुनः पुनर्भवं कर्मवशादनेकधा ।
प्राज्ञो ह्ययं काममयः स तत्क्षये संपद्य विज्ञानमयोऽत्र लीयते ॥ १० ॥
कामात्मकोऽप्येष चिदात्मरूपग्राही स द्रष्टृत्वमुपैति भासा ।
तत्रैव तेजांस्यखिलानि भूतान्युपाहितानि स्युरयं सजीवः ॥ ११ ॥
यदैप कामक्षयतः प्रकामं विशुद्धविज्ञानमयस्वरूपः ।
संपद्यतेऽसङ्गतया न कामासक्तिः पुनः सा खलु जीवमुक्तिः ॥ १२ ॥
संपद्यते ब्रह्म यदैप जीवः कामैर्विमुक्तः सकलैः स तर्हि ।
आनन्दमात्रो भवति प्रकाशो विज्ञानमानन्दमयं हि पूर्णम् ॥ १३ ॥

## आनन्दसूत्रम् ।

३ आनन्द एप द्विविधः प्रतीतः प्राज्ञात्मना चाथ चिदात्मना वा ।
प्राज्ञेन तुच्छा विपयेषु मोदप्रमोदसुप्रेममुखा भवन्ति ॥ १४ ॥
आसक्तिरूपा विपयोपरागात् कामात्मना ते प्रभवन्ति तुच्छाः ।
तद्व्यक्तिकालाश्रितकामभेदान्मोदा अमोदा अप्रियाः प्रियाः स्युः ॥ १५ ॥
वैज्ञानिको वास्तविकस्तु साक्षादानन्द उक्तः पृथगेषु मुख्यः ।
त्रेधात्मनोऽप्रच्यवनात् तथास्या प्रक्षोभणात् तस्य च वर्द्धनाद्वा ॥ १६ ॥
विज्ञानमात्मा ह्यमितो विभुत्वात् प्राज्ञे मिते त्वायतने निविष्टः ।
प्राज्ञाभिवृद्ध्या त्वभिवर्द्धतेऽस्य ह्रासेऽल्पतामेति समे समः स्यात् ॥ १७ ॥
विभुः स भूमापि मितिप्रमाणादानन्दरूपो भवति प्रशान्तः ।
प्राज्ञस्य चानन्द इहायमात्मा तेनास्य नायं विपयोऽनुभाव्यः ॥ १८ ॥
प्राज्ञस्तमः प्राप्य विहीयते चेत् क्षुभ्णाति वा प्राप्यभयं तदानीम् ।
जलस्य दोषात् प्रतिविम्बवत् सा त्विरक्षोभमायात्यपचीयते वा ॥ १९ ॥
दुःखं यदा प्रत्ययते ततस्तद्विरुद्धवृत्तिः सुखमस्ति तेन ।
अप्रच्युतः शान्त इहायमात्मा नितान्तमानन्द इति प्रतीयात् ॥ २० ॥
प्राज्ञोऽथवैपोऽभ्युदयं प्रपन्नो लोकप्रजावित्तयशःपशुभ्यः ।
क्रमेण भूमानमुपैत्य पूर्वामानन्दमात्रामनुभूय धत्ते ॥ २१ ॥
भूमोदये सोऽनु भवत्यमुं प्रागानन्दमात्मानमथातनोति ।

तस्माद्धनाद्यभ्युदये क्षणेनानन्दं प्रपश्यन्न पुनः स पश्येद् ॥ २२ ॥
सुखं यदस्त्यात्मनि योगकाले पश्यामि तल्लाभत आत्मबुद्धिम् ।
ततो विजानामि सुखं स आत्मा प्राणेषु विज्ञानमयोऽस्ति योऽसौ ॥ २३ ॥
सर्वो जनः कामयते हि सौख्यं प्रीणाति यत्कामयते तदेव ।
यच्चात्मने कामयतेऽत्र कामान् कामः स आत्मैव ततः सुखं सः ॥ २४ ॥
उपप्लवं दस्युभिरेष लब्ध्वा स्त्रीपुत्रवित्ताद्यखिलं विहाय ।
आत्मानमादाय पलायतेऽयं तस्मात् प्रियः सर्वत एव आत्मा ॥ २५ ॥
आत्मा हि विज्ञानमयोऽयमस्ति तमेव चानन्दमयं प्रतीयात् ।
तदित्थमानन्दचिदस्ति रूपास्ता भावना द्रष्टृगताः प्रविद्यात् ॥ २६ ॥
प्रत्येककूटे किल कर्मरूपनाम्नां त्रयाणामथवैककूटे ।
स सच्चिदानन्दघनोऽस्ति यस्मात् तस्माच्च कूटस्थमिमं वदन्ति ॥ २७ ॥
सत्तामतिष्ठस्त्यखिलं हि विश्वं विज्ञानमेवास्त्यखिलं हि विश्वम् ।
आनन्द एवास्त्यखिलं हि विश्वं तं सच्चिदानन्दमहं वदामि ॥ २८ ॥

## कर्मसूत्रम् ।

४ अथ त्रयं कर्म च नामरूपं तत्कर्म या वस्तुनि शक्तिरस्ति ।
त्विट् पाचनव्योषणतापमग्नौ यथा जले स्नेहद्रवत्वशैत्यम् ॥ २९ ॥
कर्माणि सर्वेषु भवन्ति यस्मिन्नकर्म तद्वस्तु न किञ्चिदस्ति ।
यस्योपयोगे विनियुज्यते तत्कर्मास्य तत् कर्म तु वस्तु मन्ये ॥ ३० ॥
गतिः स्थितिर्वा शयनासनाद्याश्चेष्टा अमीषामपि सन्ति सर्वाः ।
देशाँश्च कालाँश्च बहून् श्रयन्त्यो दीर्घा हि रेखा इव लम्बमाना ॥ ३१ ॥
तान्येव कर्माणि वदामि येषां रूपं भवेदायतमित्थमित्थम् ।
न यत्र सन्तानमुतप्रवाहं पश्यामि तत्रोपदिशामि कर्म ॥ ३२ ॥
रेखा हि सा बिन्दव एव क्लृप्तास्तां किन्तु रेखां न वदामि बिन्दून् ।
सा बिन्दुभिर्भिन्नतया प्रतीता रेखास्ति मायैव तथैव कर्म ॥ ३३ ॥
क्षणं क्षणं बिन्दुवदेव भिन्नं तच्चद्बलं नश्यति जायते च ।
न कर्म किञ्चित् पृथगस्ति रूपं पृथक् तु पश्यामि तदस्ति कर्म ॥ ३४ ॥
न पार्श्वमानी भवतीह तिर्य्यग् मानी न विष्कंभ इहाक्ष्णयां वा ।
बिन्दुः समस्तेष्वखिलेषु सन्ति क्षेत्रे तु रेखा विविधाः प्रसिद्धाः ॥ ३५ ॥
न निर्विशेषे क्षणिके बले स्युश्चेष्टाः स्थितीत्याशयनासनाद्याः ।
बलं समं तेष्वखिलेषु किन्तु चेष्टाविशेषा इह कर्मसु स्युः ॥ ३६ ॥

## नामसूत्रम् ।

५ नामानि संज्ञाकरणं यदृच्छा जात्यादिशब्दाभ्युपपत्तिरस्मिन् ।
शब्दो विभागः स हि रूपकर्मविभागतः प्रत्ययगो विभिन्नः ॥ ३७ ॥
डित्थोऽयमश्वोऽयमितीत्थमर्थैः शब्दा अभेदेन भवन्ति सिद्धाः ।
सुप्तेष्वनेकेषु स एक एव प्रोद्बुध्यते क्रोशति यस्य नाम्ना ॥ ३८ ॥

यस्मान्नतो वाऽभिचरन्ति कृत्या तमर्थमाक्रामति दूरतोऽपि ।
तं रूपदृष्ट्येव विदन्ति नामश्रुत्यापि तस्मादयमस्य भागः ॥ ३९ ॥

## रूपसूत्रम् ।

६ स्वार्थाभ्युपेतेन्द्रियवृत्तिभागो रूपं ततो वस्तुनि दृश्यता स्यात् ।
न यस्य रूपं किमपि प्रपद्ये नैवास्ति तद्वस्तुनि मे प्रपत्तिः ॥ ४० ॥
पृथ्वीजलं वायुरथानलश्च नीलं हरित्पीतमथो कषायम् ।
तिक्तं खरः पेशलमाशुमन्दो दूरान्तिके सौष्ठवदौष्ठवे वा ॥ ४१ ॥
यत्किञ्च बुद्ध्या ध्रियते तदेषां रूपं मतं द्रष्टरि दृश्ययोगात् ।
प्राणेन वा यद्ध्रियतेऽस्य धर्मे तत्कर्म तच्चोभययोगसिद्धम् ॥ ४२ ॥
७ यद्ब्रह्म देवानकरोत् त्रिलोक्यां देवेभ्य एवेह विकारजातान् ॥
स्वं * तस्य रूपं तु पृथक् त्रिलोकातीतं परार्द्धं गतमन्यदासीत् ॥ ४३ ॥
नाम्ना च रूपेण च सर्वलोकांस्तान् प्रत्यवैद्ब्रह्म पृथक् पृथक् तत् ।
नामानि रूपाणि न देवजानि लोकेऽपि लोकातिगतानि तानि ॥ ४४ ॥
नष्टं च नष्टं च तमर्थमेकं स्वन्यान्यरूपादिभिराहरामः ।
अर्थो न नश्यत्यथ नामरूपे नष्टे पुनस्ते न लभेऽत्र लोके ॥ ४५ ॥
ते लौकिके चेद् ध्रुवमत्र लोके स्थिते भवेतां कचिदर्थवत् ते ।
विश्वस्तयोर्न प्रभवं प्रयोगे यातिं वियोगे तदलौकिके ते ॥ ४६ ॥
तद् ब्रह्मणस्ते महती ह्याभ्वे तद्ब्रह्मणस्ते महती च यक्षे ।
ज्यायस्तयो रूपमिदं वदामो नामापि रूपं न्विति याज्ञवल्क्यः ॥ ४७ ॥
रूपात् पृथक् कर्म तु नास्ति येषां पञ्चैव तेषामिह भावनाः स्युः ।
तेष्वस्ति भाति प्रियनामरूपेष्वाद्यं त्रयं ब्रह्म परे तु माया ॥ ४८ ॥
यथैव नामास्ति यथैव रूपं तथैव कर्मापि पृथग् वदामः ।
नष्टं यथा रूपमलीकवत् स्यात् तथैव कर्मापि विनश्यतीत्थम् ॥ ४९ ॥

## अमृतसत्य-सूत्रम् ।

८ एतत् त्रयं चामृतसत्यमुक्तं प्राणोऽमृतं द्रष्टृ तु तद्धनेन ।
सत्येन संछन्नमिमानि यक्षाण्यभ्वानि तैर्द्रष्टृकृतं विचित्रम् ॥ ५० ॥
नाम्नो हि वाग् ब्रह्म च साम चोक्थं रूपस्य चक्षुस्त्वथ कर्मणस्तु ।
प्राणोऽयमात्मा तत एव तेषां द्रष्टृस्थितत्वं प्रतिपादयन्ति ॥ ५१ ॥

## अभ्वसूत्रम् ।

९ न कर्म किञ्चित् पृथगस्ति रूपाद् बुद्ध्या धृतं ह्येतदपि प्रपद्ये ।
कर्मैव रूपं यदि कर्म न स्यात् किं रूपमन्यद्ब्रह्म बुद्धिगं स्यात् ॥ ५२ ॥
यद् दृश्यते तद्ध्यपि तस्य कर्म द्वे एव तस्मादिह नामरूपे ।
अभ्वे भवेतामिति केचिदाहुर्नामापि रूपं तत एकमन्ये ॥ ५३ ॥

---

* नामरूपे—शतपथे ११ कां. १ म. ११ ब्रा. ।

"सर्वाणि रूपाणि विचिन्त्य धीरो नामानि कृत्वाभिवदन् यदास्ते।"
इति ब्रुवन्ती श्रुतिरप्यनूचे नाम्नामिदं रूपनिबन्धनत्वम् ॥ ५४ ॥
स्पष्टं श्रुतिः कर्म च नाम रूपं पृथक्कृतं चाप्यपृथग्वदेकम् ।
मिथः प्रवेशादविनाकृतत्वाद् ब्रवीति तां केचिदुदाहरन्ति ॥ ५५ ॥ *
"नामेदं रूपत्वेन वृत्तरूपं रूपं चेदं नामभावेन तस्थे ।
एके सदेकमविभक्तं विभेजुः प्रागेवान्ये भेदरूपं वदन्ति ॥ ५६ ॥"
( वाक्यपदीयटीकोक्ता श्रुतिः )

## प्रत्ययसूत्रम् ।

१० तदित्थमेतत् त्रितयं तु दृश्यं विज्ञानमानन्द उतापि सत्ता ।
एतत्त्रयं द्रष्टृतदित्थमाभ्यां स प्रत्ययो यो ध्रियते ह्यखण्डः ॥ ५७ ॥
एतद्धि विज्ञानमनन्तमेकं यद् ब्रह्म नित्यं तदिदं हि विश्वम् ।
नातः परं किञ्चिदिहास्ति सत्यं तद् ब्राह्मणा ब्रह्मविदो वदन्ति ॥ ५८ ॥
यद् ब्राह्मणानां मतमेतदाहुः पुरातनं दिव्ययुगे प्रदृष्टम् ।
तदेव पश्चाद् भगवान् महर्षिः प्रदर्शयामास हि याज्ञवल्क्यः ॥ ५९ ॥

इति सदसद्वादस्य प्रत्ययस्फोटाधिकारे त्रिविकल्पे

नित्यविज्ञानसिद्धान्तः प्रथमो विकल्पः ।

इति सद्भावपक्षात्मकं ब्राह्मणमतम् ।

---

* "त्रीणि ज्योतींषि त्रयः प्रकाशाः । योऽयं जातवेदा यश्च पुरुषेष्वान्तरः प्रकाशः । यश्च प्रकाशयोः प्रकाशयिता शब्दाख्यः प्रकाशः । तत्रैतत् सर्वमुपनिबद्धं—यावत् स्थास्नु चरिष्णु चेति"—इति वाक्यपदीय ( १ । १२ ) टीकायां पुण्यराजः श्रुतिमाह ।

अथ प्रत्यगाद्वैतविमर्शे त्रिविकल्पे—

# क्षणिकविज्ञानवादः ( असद्वादः )।

---

## आर्य्यसत्यचतुष्टयम् ।

१ दुःखं * च दुःखोदयनं च मार्गौ निरोधं इत्थं नु चतुष्कमन्ये ।
ब्रुवन्ति दुःखायतने च मार्गौ दुःखोदयश्चेति चतुष्कमन्ये ॥ १ ॥
दुःखोदयेष्वायतनानि पूर्वे मार्गे निरोधं तु परे प्रवेश्य ।
चतुष्कमिच्छन्ति वयन्तु पूर्वाण्येवार्यसत्यानि पृथग् वदामः ॥ २ ॥
पृथ्वी च वायुश्च जलं च तेजो रूपं च विज्ञानमिमानि सन्ति ।
षडिन्द्रियस्यायतनानि तेषां योगेन दुःखोदय इन्द्रियेषु ॥ ३ ॥

## दुःखविवेकः ।

२ आनन्द एवाखिलमेतदुक्तं यद्ब्राह्मणैस्तद्धि न साधु विद्मः ।
स यत्नसाध्योऽस्ति निसर्गतस्तु स्याद्वेदना सर्वमिदं हि दुःखम् ॥ ४ ॥
संसारि यन्नाम तदस्ति दुःखं तत्पञ्चधा स्यादिह रूपसंज्ञे ।
संस्कारविज्ञानकवेदनाश्च स्कन्धा इमे स्युः क्षणिकाणुसंघाः ॥ ५ ॥
षड्भावना ब्रह्मविदो विदुर्या न तत्र सत्ता पृथगिष्यतेऽर्थः ।
सर्वाण्यसन्ति ह्युपपादयामः स्कन्धान् हि पञ्चैव ततो वदामः ॥ ६ ॥

## रूपस्कन्धो दुःखम् ।

३ स्वार्थाभ्युपेतेन्द्रियवृत्तिभागो रूपं ततो वस्तुनि वस्तुता स्यात् ।
न यस्य रूपं किमपि प्रपद्ये नैवास्ति तद्वस्तुनि मे प्रपत्तिः ॥ ७ ॥
पृथ्वीजलं वायुरथावलक्षं नीलं हरित्पीतमथो कषायम् ।
तिक्तं खरः पेशलमाशुमन्दो दूरान्तिके सौष्ठवदौष्ठवे वा ॥ ८ ॥
यत्किञ्च बुद्ध्या भ्रियते तदेषां रूपं मतं द्रष्टरि दृश्ययोगात् ।
प्राणेन वा यद्ध्रियतेऽस्य धर्मे स दृश्यसंस्कार इहात्मयोगात् ॥ ९ ॥

---

* दुःख, दुःखसमुदयः, निरोधः, मार्गः,—इत्यार्यसत्यचतुष्टयम् । षडायतनानां समुदयेऽन्तर्भावः । दुःखं, समुदयः षडायतनं, मार्गः—इति वा । निरोधस्य मार्गेऽन्तर्भावः ।

स्पर्शः, वेदना, तृष्णा, उपादानं, भवः, जातिः, जरा, मरणं, शोकः, परिदेवना, दुःखं, दुर्मनस्ता—इत्येवंजातीयानां सौगतसमयसिद्धानां भावनामप्येष्वेवान्तर्भावः । तृष्णया वाक्कायचेष्टोपादानम् । हा पुत्रेत्यादि प्रलापः परिदेवना ।

## संज्ञास्कन्धो दुःखम् ।

४ संज्ञा हि नामानि यतो यदृच्छा जात्यादिशब्दान् प्रवदन्त्यभेदात् ।
संप्रत्ययो भिद्यत एष शब्दोल्लेखीह रूपादपि कर्मणोऽपि ॥ १० ॥

## संस्कारस्कन्धो दुःखम् ।

५ सत्ताप्रवृत्ती परिवृत्तिशक्ती चतुर्विधं कर्म तु संस्क्रिया स्यात् ।
सत्तास्ति बुद्धिः किल संस्क्रिया सा क्षणक्रिया संततिक्लृप्तरूपा ॥ ११ ॥
शक्तिस्तु सा सत्त्वनिबन्धना भवेदर्थक्रियोत्पादनकारिता हि या ।
यतोऽन्यथा दृष्टमथान्यथा पुनः प्रदृश्यते सा परिवृत्ति संस्क्रिया ॥ १२ ॥
कायस्य वाचो मनसश्च या गतिः प्रवृत्तिरेषा तदिदं चतुर्विधम् ।
कर्मैव संस्कार इहैष उद्भवत्यात्मीय आत्मन्यपि वा प्रवाहतः ॥ १३ ॥
ये पुण्यपापाद्यभिधा अदृष्टास्ते कर्मजन्यातिशया अनित्याः ।
ते धर्मरूपा इह संनिविष्टा नश्यन्ति काले परिपाकमाप्ताः ॥ १४ ॥
ये वेदनास्कन्धनिबन्धनाः स्युः क्लेशा हि रागादय एवमन्ये ।
भवन्त्युपक्लेशगणा मदेर्ष्यामानादयस्ता अपि संस्क्रियाः स्युः ॥ १५ ॥
सत्ता पृथक् केचिदुपासते तथा परे पृथक् कर्म विदुश्च तन्मतम् ।
न साधु मन्मो द्वयमप्युपास्महे संस्कारमेवोभयसंग्रहादिह ॥ १६ ॥

## विज्ञानस्कन्धो दुःखम् ।

६ विज्ञानमिष्टं त्रिविधं स आत्मात्मीयं च संबन्ध उतानयोश्च ।

विज्ञानमस्त्यालयसंज्ञमात्मा सोऽहं तदालोचनमात्रमेतत् ॥ १७ ॥
तन्निर्विशेषं विषयातिरिक्तं तत्रेतरेऽर्थाः प्रतिबिम्बिताः स्युः ।
( इत्यात्मा )

७ आत्मीयमुक्तं त्रिविधं प्रमाणं प्रमेयमात्मायतनं च तेषु ॥ १८ ॥
प्रमाणमात्मीयमिदं चतुर्धा स्यादालम्बनं वा समनन्तरं वा ।
नियामकं वा सहकारि चेति प्रवृत्तिविज्ञानमपीदमाहुः ॥ १९ ॥
नीलाभिधालम्बनतो हि नीलाकारो भवेत् प्रत्यय एष तत्र ।
या प्रत्यभिज्ञा समनन्तरं तत् प्रोद्बुद्धसंस्कारसमन्वयात्स्यात् ॥ २० ॥
नियामकं चक्षुरतोऽस्ति रूपोल्लेखी रसप्रत्ययतो विभिन्नः ।
आलोकमात्रं सहकारि तेषां पूर्वत्रयं चित्तमुदाहरन्ति ॥ २१ ॥
अस्तीति धीर्नाम च रूपमेतत्त्रयं प्रमेयं धृतमात्मना यत् ।
कर्मेन्द्रियं धीन्द्रियमेतदर्था धर्मा मनस्यायतनानि विद्यात् ॥ २२ ॥
आत्मानमेषु त्रिषु सन्निविष्टं पश्यामि नातोऽन्यगतं तमीक्षे ।
तस्मात्तदात्मीयमिदं त्रयं स्यात् प्रमेयमेके त्विह चैत्तमाहुः ॥ २३ ॥
( इत्यात्मीयम् )

८ चित्तस्य चैत्तेऽप्ययमात्मनो वात्मीयेऽस्ति संबन्ध इहाविशेषात् ।
अवग्रहे ह्यवगमैस्त्रिधाऽसौ स्यात्तत्फलं रूपविधारणाख्यम् ॥ २४ ॥
चित्तात्मनोः संमुखता च योगश्चावग्रहः संशयनं बुभुत्सा ।
प्रमाणदृक् तद्ग्रहतन्नियोगा निर्धारणं चेति मताः षडीहाः ॥ २५ ॥
आत्मीयभेदा विधिरप्यभेदे भेदेष्वभेदानुपपत्तिरूहः ।
अर्थांशिकत्यागवशादमुष्मिन्नैकात्म्यविश्रान्तिरसाववायः ॥ २६ ॥
सम्बन्धतः प्रत्ययनं तदूर्ध्वं स्याद्धारणाऽस्यात्मनि दृश्यरूपा ।
संस्काररूपे अपि नाम चेति त्रयं तदात्मीयमिदं पुनः स्यात् ॥ २७ ॥

( इति संबन्धः )

## वेदनास्कन्धो दुःखम् ।

९ दुःखं सुखं मोह इमा अविद्यास्ता वेदनास्ता अपि दुःखमेव ।
सुखं तु दुःखस्थितिह्रासमात्रं न वस्तुगत्या सुखमस्ति किंचित् ॥ २८ ॥

## समुदयविवेकः ।

१० दुःखं हि दुःखोदयदोष आत्मात्मीयत्वसंबन्धविशेषरूपः ।
स स्यात्त्रिधा स्तम्भकृतौ तु मोहो द्वेषः प्रवेकेऽन्वयने च रागः ॥ २९ ॥
लोभादयोऽन्येऽप्यनुयायिनः स्युस्तेषां ततो दुःखमुदेति भूयः ।
स्कन्धेभ्य एभ्यः पुनरन्य एते स्कन्धा हि रागादिवशाद् भवन्ति ॥ ३० ॥
११ दुःखोदये दोष इह द्विधा स्यात् संप्रत्ययार्थोप्र निबन्धनोऽन्यः ।
स यौगपद्यात् क्रमिकात्तु योगात् तथैव हेतूपनिबन्धनोऽन्यः ॥ ३१ ॥
यथाङ्कुरोऽजायत बीजहेतुः षड्धातवः स्युः समवायिनोऽस्मिन् ।
सहैव सर्वे समवेत्यरूपं संभावयन्ते समवेतमेकम् ॥ ३२ ॥
काठिन्यगन्धौ भवतः पृथिव्याः स्नेहो रसोऽद्भ्योऽथ च तेजसः स्तः ।
रूपोष्णते स्पर्शगती तु वायोः शब्दावकाशौ गगनादुपज्ञात् ॥ ३३ ॥
सर्वं त्वृतोः स्यादिति दुःखहेतुर्नापेक्षते चेतनयत्नयोगम् ।
षड्धातुयोगाद् युगपत्तु बीजात्स्यादङ्कुरोऽयं समवायि हेतुः ॥ ३४ ॥
अथाङ्कुरोऽजायत बीजतोऽस्यात् काण्डं ततो नालमतश्च गर्भः ।
ततश्च शूकं तत एति पुष्पं ततः फलं चेति हि पर्ययाः स्युः ॥ ३५ ॥
पर्यायहेतुः क्रमिकोऽयमुक्तः परेऽपि भेदा बहवो भवन्ति ।
दुःखस्य दुःखं प्रभवस्ततस्तैः स्कन्धैर्विहीनं न जगत् कचित् स्यात् ॥३६॥

## निरोधविवेकः ।

१२ तयोर्निरोधः प्रथते विमुक्तिः सा दुःखदुःखोदयनातिमुक्तिः ।
निर्वाणमायाति तदायमात्मानात्मीयसंबन्ध उदेति तस्मात् ॥ ३७ ॥

## मार्गविवेकः ।

१३ दुःखं हि सर्वं क्षणिकं क्षणक्षयीत्येव दृढा या प्रथतेऽत्र वासना ।
निरोधहेतुः स हि मार्ग उच्यते दुःखान्तमायाति हि तेन सोऽध्वना ॥ ३८ ॥
विज्ञानमेवालयसंज्ञमात्मा तत्रैव सर्वा अपि वासनाः स्युः ।
तद्वासनानाशत आत्मशुद्धिः संमार्जनं तत् तत एव मार्गः ॥ ३९ ॥
या वासना सा पुनरात्मरूपं ज्ञानक्षणप्रक्रमसंततिः सा ।
तद्वासना मार्जनतो निरोधः स्यात्संततेरात्मविनाश एषः ॥ ४० ॥
यदात्मनः सर्वमुदेति दुःखं तदात्मनाशादिह दुःखनाशः ।
दुःखप्रणाशः पुरुषार्थ इष्टस्तदात्मनिर्वाणमुशन्ति शिष्टाः ॥ ४१ ॥
स्पर्शस्तृष्णा दुःखं, शोकः परिदेवनाजरा मृत्यू ।
भव-जाति-दुर्मनस्यो-पादानं वेदना चेति ॥ ४२ ॥
सौगतसमये सिद्धा इतरेतरहेतुका एते ।
एषां यः संघातः सोपि निखिलदुःखसमुदये हेतुः ॥ ४३ ॥

## उपसंहारः ।

१४ एवंविधं बौद्धमतं निदर्शितं मतेऽत्र बौद्धं सकलं निरुच्यते ।
बुद्धिर्हि विज्ञानमिमा हि बुद्धयः सर्वास्ततो बौद्धमिदं जगद्विदुः ॥ ४४ ॥
उत्पन्नपक्रमवत् प्रवाहि बुद्धिक्षणानां स्वविभागभाजाम् ।
सन्तानधारा बहुधा प्रवृत्ता आभाति तद्विश्वमसारमेतत् ॥ ४५ ॥
सर्वं तु दुःखं क्षणिकं स्वलक्षणं शून्यं च बुद्धः स पुराभ्युपागमत् ।
बौद्धैरशेषैरपि चादितस्त्रयं मत्वा चतुर्थं तु कृतं चतुर्मतम् ॥ ४६ ॥
वैभाषिकं माध्यमिकं च योगाचारश्च सौत्रान्तिकमित्थमन्याः ।
शाखाः क्रमाद्बौद्धमते चतस्रोऽभूवन् प्रधाना अपरे च केचित् ॥ ४७ ॥
* द्विसहस्राब्दसकाले मध्यमिका नामतो नगरी ।
शिविजनपदे पुरासीन्नगरीत्येवाहुरधुनैनाम् ॥ ४८ ॥
बुद्धस्य शाक्यसिंहस्यैतस्यां मतधरा बहवः ।
आसन् माध्यमिकास्ते सर्वं शून्यं गुरूक्तितः प्राहुः ॥ ४९ ॥
शून्यं विज्ञानात् परमिति वा वैज्ञानिकाः परे व्यवदन् ।
विषयाः सन्ति परोक्षा इति हि तृतीयाः परेऽकथयन् ॥ ५० ॥

---

* राजपूताने में मेवाड़ उदयपुर राज्य में चित्तौड़ के किले से अनुमान ७ मील उत्तर "नगरी" नाम का शहर है वह बेदला के चौहान सर्दार की जागीर में है। यही ईस्वी सन् पूर्व की दूसरी शताब्दी के लगभग मध्यमिका नगरी कहलाती थी। वहां के उसी समय के तांबे के सिक्के मिले हैं जिनपर—"मझमिकाय शिविजन पदस"—यह लेख है। इसका अर्थ है—शिविदेश के मध्यमिका नगरी का सिक्का।

वैभाषिकाश्चतुर्था गुरुवचनं शून्यमिति नातस्थे ।
वैभाषिकत्वमेषां स्वगुरुविरुद्धार्थभाषित्वात् ॥ ५१ ॥
बौद्ध मते वा श्रमणे मते वा वैनाशिकत्वानुभवादभेदम् ।
इच्छन्ति केचिच्चिदचित्वमूलप्रभेदतो भेदमुशन्ति केचित् ॥ ५२ ॥

इति सदसद्वादस्य प्रत्ययस्फोटाधिकारे त्रिविकल्पे क्षणिक-
विज्ञानसिद्धान्तो द्वितीयो विकल्पः ॥ २ ॥

इत्यसद्वादपक्षात्मकं श्रमणमतम् ।

अथ प्रत्ययाद्वैतविमर्शे त्रिविकल्पे—

# आनन्दविज्ञानवादः । (सदसद्वादः)

## अस्तिभाती ।

१ आनन्दतः सर्वमिदं प्रजज्ञे द्वे तस्य रूपे भवतोऽस्तिभाती ।
दुःखं हि शून्यं सुखमर्थसत्ता दुःखं ह्यविद्या सुखमर्थबोधः ॥ १ ॥
न चोपलब्धिः पृथगस्तितः स्यान्नास्तिः पृथक् संविदितोपलब्धेः ।
एकं तयोरव्यभिचारतो यद्रूपं तमानन्दमुपब्रुवन्ति ॥ २ ॥
आनन्दमव्याकृतरूपमाहुस्तस्यैव तु व्याकृतिरस्तिभाती ।
द्रव्यं गुणः कर्म च तेऽस्तिभावा भात्या तु सामान्यविशेषभावौ ॥ ३ ॥

## सामान्यविशेषाभ्यां समवायः ।

२ एकैव सत्ता बहुभिर्विशेषैः पृथक्कृता तेन विभेददृष्टिः ।
सत्ताबहुष्वेकतया प्रतीतिर्विशेष एकत्र बहुत्वबुद्धिः ॥ ४ ॥
भूमा तु सत्ता त्वणिमा विशेषः पश्यामि ताभ्यां समवेतरूपम् ।
सोऽर्थो हि सामान्यविशेषतो यो द्रव्ये गुणादेः समवाय एकः ॥ ५ ॥
व्यक्तिर्विशेषः किल जातिरेषा सत्ताऽऽकृतिस्तूभयभोगमात्रा ।
जात्याकृतिव्यक्तिकृतः पदार्थः स खल्वमूर्षां समवायरूपः ॥ ६ ॥
भूमा त्वणिम्ना ध्रियतेऽल्पतायां भूम्नाणिमापि ध्रियते विसारे ।
तत्सिद्धमात्राऽऽकृतिरेतयावच्छिन्नास्तिमत् सत् त्रितयं तदाहुः ॥ ७ ॥
कर्माणि सामान्यविशेषभेदाद् गुणाश्च द्रव्ये समवायमीयुः ।
* इत्थं कृतोऽयः समवाय एकस्तमेव लोकास्तु पदार्थमाहुः ॥ ८ ॥
वैशेषिके तत्र नये पदार्थाः षडित्थमेके प्रतियन्ति तत्र ।
धर्म्मा अमी कर्म्मगुणा विना तैर्द्रव्यं न सत्तां न विशेषमेयात् ॥ ९ ॥

## भावाभावौ ।

३ यो भाष्यते तत्र हि भावशब्दो यः सत्तया भाव्यत एष भावः ।
यो भावनाभिर्ध्रियते स भावो भावा इमे यानिह भावयामः ॥ १० ॥
त्रिधा हि भावा अपि भाति सिद्धा अप्यस्ति सिद्धा अपि तद्द्विसिद्धाः ।
सर्वान् द्विसिद्धानिह लोकयामस्तत्रास्ति सिद्धानपि भाति सिद्धान् ॥११॥
द्रव्यं गुणः कर्म च ते त्रयोऽस्त्या भात्या तु सामान्यविशेषभावौ ।
द्वाभ्यां पुनस्तत्समवाय इत्थं भावा अभावस्तु विभागरूपी ॥ १२ ॥

---

* द्रव्ये गुणकर्म्मणां सामान्यविशेषाभ्यां ये समवायास्ते पदार्थाः—इति कणादसूत्रार्थः ।

## सदसद्भ्यामद्वैतम् ।

४ अस्तिर्हि सामान्यमथेह भातिर्गुणस्तदित्थं न तयोर्विशिष्टम् ।
अस्तिस्तु भात्याऽथ च भातिरस्त्या सिद्ध्यत्यतस्ते अपि शुक्लरूपे ॥ १३ ॥
यद्भाति सिद्धं यदिहास्ति सिद्धं यच्च द्विसिद्धं सदिदं समस्तम् ।
असत्तु शून्यं तदभावमाहुर्द्वैतं त्वसत्त्वादसतो न कल्प्यम् ॥ १४ ॥

## द्रव्यम् ।

५ गुणाश्च कर्माणि च यत्र सन्ति द्रव्यं तदुक्तं गुणकर्मभिन्नम् ।
गुणेषु कर्मस्वपि वा गुणा वा कर्माणि द्रव्याण्यपि वा न सन्ति ॥ १५ ॥
पृथ्व्यम्बुतेजः पवनोऽन्तरिक्षं कालो दिगात्मा मन इत्यमूनि ।
द्रव्याणि तेषामपि कालदिग्भ्यां तान्यस्ति सिद्धानि पराणि यानि ॥ १६ ॥

## द्रव्यविशेषपरीक्षा ।

६ (१) द्रव्यं द्विधास्तीश्वरविश्वभेदाद् यदीश्वराख्यं तदिहैकमेव ।
तदक्रियं निर्गुणमस्ति विश्वं त्वनेकरूपं सगुणं सकर्म ॥ १७ ॥
निर्लक्षणं कर्मगुणानपेक्षं दिग्देशकालातिगतं विशुद्धम् ।
रूपं यदस्तीश्वरमेतदाहुर्न भेदकं तत्र ततस्तदेकम् ॥ १८ ॥
रूपं विशिष्टं गुणकर्मभिर्यत् सापेक्षमेतद्गुणकर्मभेदात् ।
तत्तारतम्याच्च भवत्यनन्तं जीवाश्च मूर्तानि च तस्य भेदाः ॥ १९ ॥

(२) इत्येक आहुः पर आहुरेको दिग्देशकालैरमितोऽस्ति नित्यः ।
विभुः स्वयम्भूरिह कश्चिदर्थो द्रव्यं गुणैः कर्मभिरस्य भेदाः ॥ २० ॥
द्रव्यं तु सत्तैव तदेकरूपं गुणाः पृथक् तेन पृथक्त्वमेषाम् ।
द्रव्यात्पृथग्भूय तु ते गुणा वा कर्माणि वा सन्ति न भवन्ति नास्मिन्॥२१॥
द्रव्याण्यनन्तानि न सन्ति, ये तु द्रव्येषु भेदाः प्रतिभान्ति केचित् ।
ते चाश्रितानां गुणकर्मणां स्युः प्रभेदतोऽध्यासवशात् प्रतीताः ॥ २२ ॥

(३) केचित्पुनः प्राहुरिमानि सन्ति द्रव्याण्यनेकानि विलक्षणानि ।
विभिन्नशक्तीनि सनातनानि स्वाभाविकास्तद्गुणकर्मभेदाः ॥ २३ ॥

(४) अन्ये विदुर्द्रव्यमिदं न किञ्चिद्गुणान् हि पश्यामि गुणातिरिक्तम् ।
न प्राप्यते किञ्चन तेन मन्ये स द्रव्यशब्दो गुणकूट एव ॥ २४ ॥

(५) इत्थं विदुर्द्रव्यमनेकधाऽन्ये किन्त्वेष ऊचे भगवानुलूकः ।
नित्यान्यनित्यानि च तानि कर्मगुणातिरिक्तानि बहूनि सन्ति ॥ २५ ॥
आत्मा मनः कालदिशौ विहायाः वाय्वग्निपाथो वसुधा इमानि ।
द्रव्याणि नित्यानि नवाथ वाय्वादयस्त्वनित्या अणुसंघरूपाः ॥ २६ ॥
नित्येषु नित्या गुणकर्मवत्ता न निर्गुणं निष्क्रियमस्ति द्रव्यम् ।
अणूनि वाय्वादिमनांसि मूर्तान्यन्यानि चत्वारि विभूनि सन्ति ॥ २७ ॥

## गुणाः ।

७ मनस्यमी रूपरसादयो ये स्युः प्रत्ययांस्तान् प्रवदन्ति तेषाम् ।
प्रयोजका वस्तुनि सन्ति धर्मा अतीन्द्रियाः केचन ते गुणाः स्युः ॥ २८ ॥
गुणा वहिर्वस्तुनि सन्ति सर्वे पृथक्त्वय तेर्ये मनसो विकाराः ।
ते प्रत्ययाश्चित्तगता गुणानां वहिःस्थितिः प्रत्ययगा विभाति ॥ २६ ॥
आकारविस्तारगतिप्रकाराः केचिद्गुणा वस्तुषु वस्तुभूताः ।
यथा प्रतीताः स्युरिमे तथैवाविशेषमर्थेष्वपि तान् प्रविद्यात् ॥ ३० ॥
किन्त्वत्र रूपं रसगन्धशब्दस्पर्शा इमे वस्तुगता न धर्माः ।
ते यौगिकाः सन्ति मनस्यमीषामुत्पादका वस्तुषु सन्ति धर्माः ॥ ३१ ॥
या वेदना कण्टकवेधतः स्यान्न कण्टके साऽपि तु सा मनःस्था ।
तद्वेदनोत्पादकतीक्ष्णताद्याः सन्त्येव धर्म्मा इह कण्टकेऽपि ॥ ३२ ॥
शोणं दरिद्रस्त्वणुवीक्षणेन पश्यामि चेद्भूरि बृहत्करेण ।
पृथक् पृथक् तर्हि भवन्ति दृष्टाः प्रत्यङ्गभाना अचलाक्षवर्णाः ॥ ३३ ॥
तस्माद् गुणा वर्णरसादिसंज्ञा वैशेषिकाः सन्ति हि भाति सिद्धाः ।
प्रयोजका ये तु गुणा अमीषां तत्संग्रहका वस्तुषु तेऽस्ति सिद्धाः ॥ ३४ ॥

८ वेगास्थितिस्थापकभावनाख्याः संस्कारभेदा गुरुता पृथक्त्वम् ।
ह्रस्वत्वदीर्घत्वमथो महत्त्वाणुत्वे परत्वापरत्वे द्रवत्वम् ॥ ३५ ॥
स्नेहोऽथ संयोगविभागसंख्या स्पर्शोऽथ शब्दो रसरूपगन्धाः ।
अधर्मधर्मौ सुखदुःखयत्ना धीद्वेष इच्छेति गुणा अमी स्युः ॥ ३६ ॥

६ ह्रस्वत्वदीर्घत्वमथोमहत्त्वाणुत्वे परत्वं च तथाऽपरत्वम् ।
पृथक्त्वसंयोगविभागसंख्याः स्युर्भाति सिद्धा अपरेऽस्ति सिद्धाः ॥ ३७ ॥
यदस्ति सिद्धत्वमुशन्ति तेषामुलूकपूर्वा मुनयः पुराणाः ।
दिक्कालवत् तन्मतमेतदेषां तत्कल्पसत्ललक्षणमेषु भाति ॥ ३८ ॥

१० केचिद् द्रवत्वं द्विविधं वदन्ति संसिद्धनैमित्तकभेदतस्तत् ।
भ्रान्तं जलेऽपि द्रवताऽग्नियोगादित्युलूको भगवानुवाच ॥ ३६ ॥
द्रव्येण चक्षुः प्रथमं युनक्ति रूपेण पश्चादिति केचिदाहुः ।
तद्भ्रान्तमेति प्रथमं तु रूपं स्वार्थं ततो द्रव्यमिदं प्रपश्येत् ॥ ४० ॥

## कर्म्म ।

११ वदन्त्यथो कर्म तु पञ्चधा तथाऽपक्षेपणोत्क्षेपणके प्रसारणम् ।
आकुञ्चनं वा गमनं च यान्यतो भिन्नानि तेषामिह संग्रहो मतः ॥ ४१ ॥
इदं द्विधा कर्म चलं फलं च तद्वस्तु नित्यं चलमस्ति सिद्धम् ।
यत्कार्य्यरूपं परिणम्यमानं तद्भाति सिद्धं तदनित्यदृष्टम् ॥ ४२ ॥

## सामान्यविशेषौ ।

१२ सामान्यमस्ति द्विविधं परं यत् तां निर्विशेषां प्रवदन्ति सत्ताम् ।
अथावरं यत् सविशेषमेतां जातिं विदुर्जातिबहुत्वमाहुः ॥ ४३ ॥

न जातिरर्थोऽस्ति नरस्य द्रष्टुर्यदाकृतिर्धीमुदिताऽथ सैव ।
उत्तिष्ठते चेन्मुहुरेष तर्हि व्यक्तिष्विमां वक्ति प्रकल्प्य जातिम् ॥ ४४ ॥
जातिर्हि धीरेव स धर्म ईक्षितुर्न वस्तुधर्मः स हि वस्तुतः पृथक् ।
सोऽनागतातीतसमीपदूरकालातिवाहितव्याक्तिसदृक्षवाग्रहः ॥ ४५ ॥
द्रव्यं तदाकार इमौ तु धर्मौ तयोर्द्वयोर्योगवशेन सृष्टिः ।
संभाव्यते प्रत्ययतः पृथक्त्वं न वस्तुतः साकृतिरेव जातिः ॥ ४६ ॥
नास्त्येव जातिः प्रवदन्ति केचिद्धीरेव जातिः प्रवदन्ति केचित् ।
स्वतोऽस्ति जातिः प्रवदन्ति केचिज्जातौ त्रिदुर्स्त्रीणि मतानि पूर्वे ॥ ४७ ॥
किन्त्वीक्षतेऽसौ भगवानुलूको वस्तूनि सन्ति त्रिविधानि लोके ।
अस्त्या च भात्योभयथा च सिद्धान्येषा तु जातिर्ध्रियतेऽत्र भात्या ॥ ४८ ॥
जातिर्विभिन्नाकृतिरस्य भिन्ना व्यक्तिश्च भिन्नेति वदत्युलूकः ।
जातिः समानप्रसवात्मिका स्यात्तल्लिङ्गमस्त्याकृतिरङ्ग संस्था ॥ ४९ ॥
स्पर्शादयो यत्र गुणा द्रवत्वं संस्कारमानौ घनता गुरुत्वे ।
यत्र क्रिया येन्द्रियतोऽभिनेया सा व्यज्यते व्यक्तिरतोऽस्ति मूर्तिः ॥ ५० ॥
सम्बन्धवस्थाऽऽकृतिसव्यपेक्षा, व्यक्तिर्न सा व्यक्तिगणे तदैक्यात् ।
जातिर्न सा भिन्नतया प्रतीतेरेकैकजातौ बहुधाकृतीनाम् ॥ ५१ ॥
य एकभावे पृथगात्मभावा नित्या अनित्या द्विविधा विशेषाः ।
तेनास्तिसिद्धा अपि भातिसिद्धास्ता व्यक्तयस्तास्त्वणुवस्तुनित्याः ॥५२॥
व्यक्त्याकृती जातिरपेक्षते सा जातिर्न चेन्मृद्गवकोऽपि गौः स्यात् ।
जात्याकृतिव्यक्त्य एकभूताः पदार्थ इष्टो न पृथक् त्रयः स्युः ॥ ५३ ॥

## भावाभावाद्वैतम् ।

१३ विद्याप्यविद्या सदसच्च भावा भावाविति द्वैतमिदं न शक्यम् ।
न द्वैतहेतुर्हि भवेदभावो भावः स एकस्त्वविशेषतः स्यात् ॥ ५४ ॥

१४ एतद्धि वैशेषिकदर्शनं तत् प्रोवाच पूर्वं भगवान् कणादः ।
द्रव्यं गुणः कर्म च लक्षितानि परीक्षितान्यत्र विशिष्य विद्यात् ॥ ५५ ॥

इति सदसद्वादस्य प्रत्ययस्फोटाधिकारे त्रिविकल्पे आनन्द-
विज्ञानसिद्धान्तस्तृतीयो विकल्पः ॥ ३ ॥

इति सदसद्वादपक्षात्मकं मध्यस्य मतम् ॥

---

इति श्रीमधुसूदनविद्यावाचस्पतिप्रणीते ब्रह्मविज्ञानशास्त्रे सदसद्वादे
प्रत्ययस्फोटाधिकारः संपूर्णः ॥ १ ॥

इति सदसद्वादस्य प्रथमं प्रस्थानं प्रत्ययविमर्शाख्यम् ॥ १ ॥

अथ प्रकृत्यद्वैतविमर्शे त्रिविकल्पे—

## कर्माद्वैतसिद्धान्तः । ( असद्वादः )

१ एकं न यावत् परतो युनक्ति तावद्विकारा न भवेयुरस्मिन् ।
तस्माद्धि नैकं जगतोऽस्य मूलं संभाव्यते द्वैतममुष्य मूलम् ॥ १ ॥
पश्यन्त इत्थं प्रवदन्ति केचित् द्वैतं न तत्साधु वयं तु विद्मः ।
असंभवं द्वैतमिदं द्वयोः स्याद् ध्रुवं विभागाय परं तृतीयम् ॥ २ ॥
एवं त्रयाणां च विभाजकं स्यात् तत्पञ्चमं चाप्यथ सप्तमं च ।
अनन्तमित्थं जगतोऽस्य मूलं भवेदसत् सद् द्वितयं तु न स्यात् ॥ ३ ॥
अथो अनन्तं जगतोऽस्य मूलं नास्तीति चेत्तर्हि तदेकमेव ।
भवेदगत्या तत एव विश्वं बभूव वायोरिव खण्डरूपात् ॥ ४ ॥

२ ब्रह्मेति यद् ब्रह्म विदो वदन्तिहि ज्ञानाख्यमप्रच्युतमद्वयं रसम् ।
विश्वस्य मूलं तदसत् प्रतिक्षणं सतामसत्वादिदमच्युतं नहि ॥ ५ ॥

३ ज्ञानं शरीरप्रभवं, शरीरं ह्यग्रे न चासीदसदूर्ध्वतः सत् ।
प्रजायते तज्जडमेव पूर्वं पश्चाज्जडं ज्ञानमिदं तु कर्म ॥ ६ ॥

४ आथर्वणे ब्रह्म विदुः स्वयंभु स्वयंचभूवेत्यसतोऽस्य भावः ।
प्रतीयते नैव पुरा यदासीत् तत् प्रादुरासीदिति कर्ममूलम् ॥ ७ ॥

५ ऋक्संहितायामदितिर्बृहस्पतिर्लौक्योऽसतोऽभूत्सदितिस्म पश्यतः ।
ये तैत्तिरीया अपि याज्ञवल्क्यका ये ताण्डिनस्तेपि तथैव तद्विदुः ॥ ८ ॥

६ यद्ब्राह्मणे शंसति तैत्तिरीये मनोऽसतोऽसृज्यतहीति, येवा ।
अग्रेऽसदेवेदमशेषमासीत् ततः सदासीदिति वेदवादाः ॥ ९ ॥

७ सिद्धं ततः सर्वमिदं पुरस्तान्नासीत् तमः शून्यमिदं तदासीत् ।
तमस्तु तत् कर्मबलं ह्यसत् तत् ततः सदैतत् सकलं बभूव ॥ १० ॥ *

---

* देवानां पूर्व्ये युगेऽसतः सदजायत ।
देवानां युगे प्रथमेऽसतः सदजायत ॥
( ऋ. मं. १०।७२ ) ( तम आसीत् तमसा गूढमग्रे इति च )

असद्वा इदमग्र आसीद्सतो वै सदजायत ।
तदात्मानं स्वयंकुरुत तस्मात् सुकृतमुच्यते ॥ ( तै. उ. )

इदं वा अग्रे नैवकिञ्चनासीत् । नद्यौरासीन्न पृथिवी नान्तरिक्षम् ।
न सदेव असतोऽकुरुत । स्यामिति । ( तै. ब्रा. २।२।६ )
असतोधि अग्रेऽसृजत । अतः प्रजापतिमजायत । ( तै. ब्रा. २।१६ )

* नैवेह किञ्चनाग्रआसीत् मृत्युनैवेदमावृतमासीदशनायया । अशनायाहि मृत्युः ।
तन्मनोऽकुरुत—आत्मन्वीस्यामिति । शतपथश्रुतिः ।

* "असदेवेदमग्र आसीत् तत्सदासीत् । तत्समभवत् । तदाण्डंनिरवर्तत"—
इतिताण्ड्यश्रुतिः ( छां. उ. खं. १६ )

८ कर्मैव विश्वं तदसत्स्वरूपं न ब्रह्मभिन्नं श्रमणा वदन्ति ।
सन्तान एव क्षणिकैः कृतो यः स शाश्वतत्वभ्रममूलमस्मिन् ॥ ११ ॥
तत्कर्मकर्माद्वयवादिनो मते शून्यं च दुःखं क्षणिकं स्वलक्षणम् ।
निःसारमेतन्न यदन्तरे रसः कुतश्चिदायाति वियाति मेघवत् ॥ १२ ॥

९ घटादिवस्तूनि न सन्ति तत्क्रिया दृष्टेन चासन्त्युपलब्धिदर्शनात् ।
स्थाने विरुद्धद्विसमन्वयोऽपि नो संभाव्यते सिद्ध्यति तेन शून्यता ॥ १३ ॥
जलं यथोष्णं भवति प्रयत्नतः शैत्यं तु यत्नापगमे स्वभावतः ।
तथेह यत्नात्सुखमेति नैति वा विनेच्छया दुःखमुपैति भूयसा ॥ १४ ॥
सर्वं ह्यणुस्कन्धमयं प्रदृश्यते स्कन्धाश्च कालेन भवन्ति भिन्नवत् ।
नारंभका व्यत्ययतोऽस्ति भिन्नता तस्माद्ध्रुवं सन्त्यणवोऽप्यणुक्षणाः ॥१५॥
निर्धर्मकत्वादिह लक्ष्यलक्षणे नस्तः स्वमेव स्वत एव लक्ष्यते ।
दिग्देशकालैरपि ते विलक्षणाः पृथक्क्षणः सर्व इमे स्वलक्षणाः ॥ १६ ॥

१० सन्तानमीक्षे स तदन्तरेऽन्यस्तदन्तरेऽन्यः स तदन्तरेऽन्यः ।
तदन्तरे नान्तत एष स्तम्भास्तस्तम्भप्रभोन्तः स्थितसारशून्यः ॥ १७ ॥

११ नानाविधान्येव बलानि वायुवत् समन्वितान्येवमनन्वितानि वा ।
विक्षेपकामावरणानुभावितान्यन्योन्यमाघ्नन्ति तदुच्यते जगत् ॥ १८ ॥
यद्दृश्यते तद्बलमेव दृश्यते न दृश्यते तत्र बलेन्तरे रसः ।
बलं बलेनैव हतं स्वयोगतः सृजत्यपूर्वं बलमेव तज्जगत् ॥ १९ ॥

१२ यदन्यदन्यद्भवतीह तद्बलस्वभाव चक्रोऽथ बलं बलान्तरात् ।
स्थैमानमायाति हतं विलक्षणं भवत् तदेतद्बलमेव नो रसः ॥ १४ ॥
समानवेगेन तु सर्वतो दिशं प्रधावदेव स्थिरमत्र दृश्यते ।
बह्वयः प्रतिद्वन्द्वितया सहैकदा दृष्टाः समानागतयोर्हि सा स्थितिः ॥१५॥

१३ बलानि सन्ति क्षणिकानि नैकमप्यनेककालं ध्रियते तथापि तैः ।
रेखेव बिन्दुप्रभवा बलैः कृता या संततिः सा स्थिरवद्विभाति नः ॥ १६ ॥
न तस्य मूर्तिर्न च तत्र देशो बिन्दुं ततः शून्यमिति ब्रवीमि ।
तैर्बिन्दुभिर्मूर्तिमतीह रेखा ततोऽसतः सद्भवतीति मन्ये ॥ १७ ॥

१४ दिग्देशकालैरुपकल्प्यते यत् तद्वस्तु च स्थानविरोधि यत् स्यात् ।
संबध्यते ब्रह्म तु नैव यत्रै रुणद्धि न स्थानमतो न वस्तु ॥ १८ ॥
सदस्ति सिद्धं किल भाति सिद्धं त्वसद्द्विधा यत् सदसत् तदुक्तम् ।
सत्तात्वसत्येव हि भाति सिद्धा ततोऽस्ति सिद्धान्यपि संत्यसन्ति ॥ १९ ॥

१५ इदं हि सर्वं भ्रमणं प्रदृश्यते यदस्ति तच्छ्राम्यति हि प्रतिक्षणम् ।
न जातु विश्राम्यति न स्वकर्मकृत् स्थिरं तदित्थं श्रमणाः प्रचक्षते ॥ २० ॥
कणादैर्विदेवं सुगतस्य कोकुलो विरोमकश्चापि तथा सतानुगाः ।
द्रव्यात्मनास्तित्वमुपासतेऽसतामर्थक्रियायां च वदन्त्यकर्तृताम् ॥ २१ ॥

अष्टादशैषां च निकायभेदा अवान्तरानेकविचारभेदात् ।
भवन्ति तानत्र न दर्शयामो मुख्यार्थसंदर्शनमात्रकामाः ॥ २२ ॥
नष्टं मतं यैः समये पुनः पुनः प्रवर्तितं ते सुगतास्तु सप्तधा ।
स्मृताविपश्यी च शिखी च विश्वभूस्तथा ककुच्छन्द उताथ काञ्चनः ॥२३॥
षष्ठोऽभवत् काश्यप एष सप्तमो यः शाक्यसिंहः प्रथितः सगौतमः ।
बुद्धा इमे स्युः श्रमणाश्च ते मतास्ते नास्तिका नास्ति सुखं हि तन्मते ॥२४॥

श्रमणा वातरसना आत्मविद्याविशारदाः ।
कर्मतन्त्रप्रणेतारो नच त्वन्ये न नास्तिकाः ॥ २५ ॥
कविर्हरिरन्तरिक्षः प्रबुद्धः पिप्पलायनः ।
आविर्होत्रोऽथ द्रुमिलश्चमसः करभाजनः ॥ २६ ॥
विदेहस्याजनाभस्य मिथिलेशस्य संसदि ।
अभयप्रापकं कर्म योगमेते न्यदर्शयन् ॥ २७ ॥ ( भागवते ११ )

इति सदसद्वादस्य प्रकृत्यद्वैतविमर्शे कर्माद्वैतसिद्धान्तः पूर्णः ।
इत्यसद्वादरूपं वैनाशिकमतम् ॥

### अथ प्रकृत्यद्वैतविमर्शे त्रिविकल्पे—

# ब्रह्माद्वैतसिद्धान्तः। (सद्वादः)

## १–रसोपपादन–प्रसङ्गः।

ये ब्राह्मणा ब्रह्मविदस्त आहुर्ब्रह्मैव विश्वं न तु कर्म किञ्चित्।
सनातनं ब्रह्म सनातनं तद्विश्वं कथं कर्म भवेदसारम् ॥ १ ॥
तद्ब्रह्म ब्रह्माद्वयवादिनो मते पूर्णं सुखं शाश्वतिकं विलक्षणम्।
तल्लक्षणं कर्म ततो विलक्षणं भवन्न नास्तीह परोवरीणवत् ॥ २ ॥

२ ब्रह्मत्वमत्वा यदिदं बलान्तरा हतं बलं स्थेमगतं तु मन्यसे।
स्थेमातुकोऽसौ न बलं चिरत्वतो रसः समृत्युप्रमथे प्रकाशते ॥ ३ ॥

३ निरन्तराण्येव बलानि सन्ततिर्निरुच्यते किन्तु न सन्ततिर्बलम्।
परोवरीणाहि बहुक्षणैकिका कथं बलं नाम भवेद्रसोहि सः ॥ ४ ॥

४ जलस्थधारा करकादिक्लृप्ता शिल्पाभिरामास्ति तदत्र शिल्पम्।
सा रम्यता तत्पतनं च धारा जलं बलं चेति बलं पृथक् स्यात् ॥ ५ ॥
रूपेषु योगेषु तथा प्रतिष्ठा स्वेषां प्रभेदा बलभेदनित्याः।
संयुक्तरूपं तु यदस्ति तेषामेकं तदेकत्वमिदं कुतोऽस्ति ॥ ६ ॥
तेषां विधर्त्री मम बुद्धिरेका तयैकया संग्रहणात्तु तेषाम्।
एकत्वमायातमियं च बुद्धिर्बलं बलैकत्वमिदं ततः स्यात् ॥ ७ ॥
धियो बहूनां युगपत् प्रभिन्ना गृह्णन्ति काले न च ताः स्युरन्याः।
अथापि रूपं ध्रियते तदेकं न बुद्धिभेदादिह वस्तुभेदः ॥ ८ ॥
तस्मात्प्रभिन्नेषु बलेष्वभिन्नवद् बलेष्वनेकेषु यदन्तरेकवत्।
परस्परायुक्तबलस्वयोगकृद् यदीक्ष्यते सोऽस्ति बलेतरो रसः ॥ ९ ॥

५ अथोच्यते यद्बलमेव सा स्थितिः समानवेगेन हि सर्वतो विशम्।
गच्छत् स्थिरं भाति बलान्न तत्पृथक्तदप्यविज्ञान्यमिव प्रभाषते ॥ १० ॥
गतिर्बलं तच्च बलान्तरेणाप्रणोदितं नोदयते कदाचित्।
न नोदना दिङ्नियमानपेक्षा तत्सर्वदिश्या गतिरेव नास्ति ॥ ११ ॥
सा सर्वदिश्या गतिरस्ति चेत् तदा स्यात् सर्वदा सर्वबलैः प्रणोदिता।
सर्वैर्बलैरप्यथवा न नोदिता सा नित्यसुस्था पृथगिष्यतां रसः ॥ १२ ॥

६ गतिस्त्रिधा स्यादपि वर्धमाना प्रक्षीयमाणाथ परा स्थिरापि।
गतेर्गतिस्तेन भवेत् प्रतीता गतेर्गतिं वेग इति ब्रुवन्ति ॥ १३ ॥
यद्वा समत्वं विषमत्वमाहुर्गत्यां तदेतन्न विचारशून्यम्।
एका गतिस्तत्र कयाथ कस्या वैषम्यसाम्ये वद संभवेताम् ॥ १४ ॥

क्रमेण वेगो ह्रसति क्रमेण प्रवर्द्धते वा स समधिराय ।
अर्वाग्गतिस्तेन परागगतिर्वा विना गतिर्वास्ति गतिस्त्रिधैवम् ॥ १५ ॥
गतौ स्थिरत्वं तदिदं नु कस्मात् पराक्त्वमर्वाक्त्वमपीद कस्मात् ।
त्रैविध्यमेतद्यदपेक्ष्यसिद्धं गतेः पृथक् सोऽस्ति रसः स आत्मा ॥ १६ ॥

७ गतौ स्थितिर्नामरसः समन्वितो न चेद्ध्रुवस्तर्हि गतिः कथं भवेत् ।
स्थितोऽत्र गत्येयुगपत्स्थितो भवेत् स्थितः सदाऽसौ नपथिस्थितोभवेत्१७
वेगस्य निर्धारणमस्ति कालतः प्रदेशतश्चैव यदाल्पकालतः ।
बहून् प्रदेशान् क्रमते तदाधिको मन्दोऽल्पदेशान् बहुकालतो यदि ॥ १८ ॥
तद्वेगमानं क्रियते यतो यतः कालः सदेशः सरसः पृथक् भवेत् ।
कालेन गेयं बलमेव चक्षते विचक्षणाः केचन काललक्षणम् ॥ १९ ॥

८ रसोबलं नास्ति बलद्वयोद्वये बलाश्रयस्यास्य रसस्य दृश्यते ।
तटस्थतामार्गवदेकधा रसो बलानि तस्मिन् पथिकानि भिन्नवत् ॥ २० ॥

९ उच्छिद्यमानान्यपि च क्षणं क्षणं पुनर्भवन्त्येव भवन्त्यनुक्षणम् ।
असन्त्यपीमानि तु नो न सन्ति यत् सर्वे रसोऽस्मिन् क्षणिकोहिनास्ति सः२१

१० बिन्दुर्द्विधाऽदेशसदेशभेदाद् रेखात्वदेशादिति ये वदन्ति ।
तत्कल्पनामात्रमसारमेषां वचः स बिन्दुर्हि मनो विलासः ॥ २२ ॥
अस्त्येष बिन्दुर्य्यदि तर्ह्यसत्यं कथं भवेत् किम तदात्थ तत्सत् ।
विकल्पवृत्त्या यदि तत्र सत्ता मनः सदेतत्र तदान्यदेतत् ॥ २३ ॥

११ बिन्दुः स यस्मिन्नहि देशकालौ तैर्बिन्दुभिर्या भवतीह रेखा ।
ततो न देशो ह्युपपद्यतेऽस्यां किन्त्वस्ति देशः सरसो मतो मे ॥ २४ ॥
अनाद्यनन्ता इहता अनन्ता रेखा न कैरभ्युपगन्तुमर्हाः ।
ताश्च प्रदेशा अपि स प्रदेशाः स एव देशो जगतो रसः सः ॥ २५ ॥
स चाणिमा बिन्दुरथैव भूमा निःशेषबिन्द्वात्मपरासर्वरेखाः ।
दिग्देशकालापरिमेयरूपः स एव एवास्ति रसः सदेशः ॥ २६ ॥

१२ अनाश्रयं क्वापि बलं न दृश्यते बलाश्रयं चेदथ तद्बलं पुनः ।
बलाश्रयं स्यात्सदिहान्ततो बलं यदाश्रितं तच्च बलं रसोहि सः ॥ २७ ॥

१३ बलं हि कर्मात्मकमप्रतिष्ठितं स्वभावतो विक्रियते प्रतिक्षणम् ।
ततः प्रतिष्ठातुमिदं न संभवेद् विनारसेन स्वमहिम्नि तद्बलम् ॥ २८ ॥
तस्मादिदं यत्र बलं प्रतिष्ठितं विलक्षणत्वं जनयत् प्रदृश्यते ।
अकर्म तद्रूपमवश्यमिष्यतेऽप्यस्तं तु कर्मानृतमत्र भासते ॥ २९ ॥

१४ निस्तारतम्यं न विशिष्यगम्यं पाप्मातिरेकाच्च तदस्ति रम्यम् ।
परेऽवरेवाथ परावरे वा परात्परं गूढमिदं विदन्ति ॥ ३० ॥

## २—सृष्टिप्रतिवादप्रसङ्गः ।

१५ एको न यावत् परतो युनक्ति तावन्न सृष्टिर्भवतीति वक्ति ।
नास्त्येव सृष्टिस्तु वयं वदामः सृष्टस्य भूम्न्यस्ति हि नावकाशः ॥ ३१ ॥

स्तब्धं तु भूम्नास्ति जगत् समस्तं न चाणुमात्रं क्वचिदस्ति शून्यम्।
सृष्टं त्वपूर्वं वद कुत्र तिष्ठेत् पूर्णं विरुन्ध्यादिह पूर्णमन्यत् ॥ ३२ ॥

१६ अथास्ति शून्यं बहु चान्तरान्तरे तत्रावतिष्ठेत नवं नवं यदि ।
तदाप्यवश्यं परिपूर्णतोदये सृष्टिः कदाचित् प्रतिबन्धिता भवेत् ॥ ३३ ॥

१७ ब्रह्माण्डमेकं जगदस्ति तद्बहिः शून्यप्रदेशा अपि सन्ति भूयसा ।
सृष्टैरपूर्वैर्बहुभिः पुनः पुनः प्रवर्द्धतेऽण्डं यदि सर्वतो दिशम् ॥ ३४ ॥
तदप्यविज्ञान्यमिवात्थ तर्हि ब्रह्माण्डसीमैव न निश्चिता स्यात् ।
यद्दृश्यतेऽण्डं तदणु क्वचासीद् वर्धिष्यतेऽस्मादिति कः प्रतीयात् ॥ ३५ ॥

१८ उत्पद्यते यावदनारतं तद् विलीयते तावदनारतं तत् ।
न वर्द्धते नापि विहीयतेऽस्मादित्याहुरेके च तदप्यसाधु ॥ ३६ ॥
यावत्पुरासीदपि तावदूर्ध्वं जातस्तदूनं न च वातिरिक्तम् ।
इत्युच्यते चेत् किमिदं तदेकं किं तच्च रूपं परिवर्तते यत् ॥ ३७ ॥
रसः स एकः परिवर्ततेऽस्मिन् बलं तदित्थं द्विविधं यदात्थ ।
उत्पद्यतेऽन्यच्च विलीयतेऽन्यच्चैवं वृथा सृष्टिमिमां तदास्थ ॥ ३८ ॥
अमूर्तमूर्तव्यतिरिक्तरूपादज्ञेयतोऽनिर्वचनीयतेऽर्थात् ।
अमूर्तमूर्तात्मकविश्वमेतत् संभाव्यते तत्र हि सृष्टिशब्दः ॥ ३९ ॥
सौक्ष्म्यंगतः सूक्ष्मतमस्वरूपात् स्थौल्ये ततः स्थूलतमाच्च सौक्ष्म्ये ।
सोऽर्थः स्वभावात् परिवर्ततेऽस्यावस्थान्यतासृष्टिरिति प्रसिद्धा ॥ ४० ॥
किन्त्वस्य यद्वास्तविकं स्वरूपं तदेव नानास्थितिभिः प्रपद्ये ।
स्वमस्य रूपं परिवर्त्तनं चेत् तदान्यतोऽन्यस्य न सृष्टिरस्ति ॥ ४१ ॥

१९ आपः पृथिव्यां रसरूपतः स्थिता धूमात्मनापः पृथिवीत उत्थिताः ।
अभ्रान्तरिक्षे दिवि याति सोमतां पर्जन्यमागत्य स याति वृष्टिताम् ॥ ४२ ॥
वृष्टिर्भवत्यन्नमिहौर्वेरान्तरे तत्पुंसि रेतः स पुमान् वधूदरे ।
शिशुर्युवा स स्थविरो विपद्गतः क्षितिं गतोऽप्येति रसात्मनाऽन्ततः ॥ ४३ ॥
रसः पृथिव्युत्थित उद्भिदंकुरः स्कन्धः प्रशाखा विटपो दलोच्चयः ।
पुष्पोद्गमः श्रीविगमः फलोदयः शोषोऽतिजीर्णः क्षितिमेत्यसौ रसः ॥ ४४ ॥
यच्चावदेकं रससंज्ञमुक्तं तत्रैव तत्कर्म च नामरूपम् ।
तद्वस्तुशून्यं प्रतिभाति भूयो नोत्पद्यते वस्तु विलीयते वा ॥ ४५ ॥
यो ह्यत्रसारः प्रतिवस्तु दृश्यते रसः स नित्यो न विलीय जायते ।
यज्जायते तत्र विलीयते पुनर्न वस्तु तन्मायिकमेव भासते ॥ ४६ ॥
वस्त्वेकमेव प्रतिपद्यतेऽन्यथाऽन्यथा नवीनं तु न जायते पृथक् ।
एकस्य तत्कर्मणि नामरूपयोर्व्यत्यासतोऽवस्थितिरस्ति मायिकी ॥ ४७ ॥

### ३—मायावाद-प्रसङ्गः ।

२० यदत्र किञ्चित् क्षणिकं समीक्ष्यते तदभ्वमुक्तं तदु यक्षमुच्यते ।
रूपं च तन्नाम च कर्म चेतिहि त्रयं ततोऽन्यत्परिवर्तते नहि ॥ ४८ ॥

कुतस्तदायाति कुतो वियाति वा न तद्यथावत् प्रतिपद्यते यतः ।
पूर्वं च नासीत् परतो न दृश्यते ततोऽस्ति मायैव चलं न वस्तु तत् ॥ ४९ ॥
रूपाणि नामानि च तानि कर्माण्येतानि यस्य प्रभवन्ति भूयः ।
यदेकमेतैः परिवर्त्तमानैरुद्दिश्यते तेषु स एव सारः ॥ ५० ॥

२१ यदत्र वीक्षे परिवर्तनं क्वचिन्नाकस्मिकं तन्नियतं तु दृश्यते ।
सर्वत्र सेयं नियतिः सनातनी समानभावेन विभाति सुस्थिरा ॥ ५१ ॥
सर्वं नियत्यां परिवर्तनं धृतं स्वयं तु नेयं परिवर्तते क्वचित् ।
तां वच्मि सत्यं स रसो न तद्बलं स्थिरं हि रूपं परिवर्तनात्मकम् ॥ ५२ ॥

२२ पश्यन्ति हि व्योमतलं सुनीलं चान्तर्बिलं प्रान्तनतं तदूर्ध्वम् ।
मन्यामहे धिन्त्र्यतलं विशुद्धं समं समन्तादविकाररूपम् ॥ ५३ ॥
तथैव पश्यन्ति हि कर्म घोरं क्षीणं त्वणीयः क्षणिकैरनेकम् ।
तदेव तु ब्रह्म वदामि शान्तं भूमानमक्षुब्धमुदारमेकम् ॥ ५४ ॥

२३ सदस्ति सिद्धं किल भाति सिद्धं त्वसद्द्विधा यत् सदसत्तदुक्तम् ।
भातिस्तु सत्येव मतास्ति सिद्धा तद्भाति सिद्धान्यपि तानि सन्ति ॥ ५५ ॥

२४ स विश्वकर्मा खलु भौवनः प्राक् सतः सतः आनयतीह सृष्टिम् ।
"योनः पिता जनिता यो विधाता यो नः सतो अभ्यासज्जजान"। (तै-सं-८।६।२।३)
* ये तैत्तिरीया अपि याज्ञवल्क्या ये ताण्डिनस्तेपि तथा तदाहुः ।
असत्प्रवादं यदु गर्हयित्वा सतः सतां सृष्टिममी वदन्ति ॥ ५७ ॥

२५ सर्वं जगद् ब्राह्मणमेव वर्तते ब्रह्म प्रतिष्ठा प्रभवः परायणम् ।
ब्रह्माविनाशीत्यविनाशि दृश्यते विश्वं न्विति ब्रह्मविदः प्रचक्षते ॥ ५८ ॥
"एष नित्यो महिमा ब्रह्मस्य न कर्मणा वर्द्धते नो कनीयान् ।
तस्यैव स्यात् पदवित्तं विदित्वा न कर्मणा लिप्यते पापकेन" ॥ ५९ ॥

इति सदसद्वादस्य प्रकृत्यद्वैतविमर्शे—
ब्रह्माद्वैतसिद्धान्तः ॥

इति सद्वादरूपं ब्राह्मणमतम् ॥

---

* असन्नेव सभवति असद् ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद् वेद सन्तमेनं ततो विदुः ॥
( तै. उ. )

असद्वा इदमग्र आसीत् । किं तदसदासीदिति । ऋषयो वाव तेऽग्रे ऽसदासीदिति
( शत. ६ । १ । १ )

सदेव सौम्येदमग्र आसीत् एकमेवाद्वितीयम् । तद्धैक आहुः—असदेवेदमग्र आसी—
देकमेवाद्वितीयम् । तस्मादसतः सज्जायेत । कुतस्तु खलु सौम्यैवं स्यादिति होवाच—
कथमसतः सज्जायेतेति । सत्त्वेव सौम्येदमग्र आसीदेकमेवाद्वितीयम् ।
( छां. उ. )

अथ प्रकृत्यद्वैतविमर्शे त्रिविकल्पे—

# द्वैताद्वैतसिद्धान्तः ( सदसद्वादः )।

१ येषामसद् ब्रह्म भवन्त्यसारात्मानो ध्रुवं ते स्वयमप्यसन्तः।
ब्रह्मा विनाश्यस्ति सदेति येषां मतिः स्थिरात्मान इमे हि सन्तः ॥ १ ॥

२ यथाभ्रखण्डावृतमर्कमण्डलं पृथग् दृशोहा स्पृशतां न जायते।
सूर्योस्ति धीरेवमिहापि कर्मणाऽवृतेऽमृते धीरतां न जायते ॥ २ ॥
तदभ्रखण्डावृतदृष्टिमण्डलं न संस्पृशत्यत्र तदर्कमण्डम्।
रविर्न चेत्तर्हि तदभ्रमण्डलं कथं तमस्याकलयेत् तमोमयम् ॥ ३ ॥
तत्कर्मदोषावृतदृष्टिमण्डलं न ब्रह्म तद्वथापकमाशु पश्यति।
न ब्रह्मचेत् कर्मनिराश्रयं कथं स्थितं भवेत् कस्य च संस्क्रिया भवेत् ॥ ४।
तद्ब्रह्म तस्मात् पृथगिष्यते ध्रुवं तत्रैव तत्कर्म समस्तमास्थितम्।
उदेति तत्रैव च तिष्ठति क्षणं लयं च तत्रैव तदेति खण्डशः ॥ ५ ॥

३ ब्रह्मामृतं पूर्णमखण्डमद्वयं शान्तं शिवं शाश्वतिकं तथा ऽयम्।
अनादि चानन्तमसङ्गमव्ययं तन्निर्गुणं निष्कलमेकमक्रियम् ॥ ६ ॥
क्षुब्धं बलं तु क्षणिकं प्रदेशवत् घोरं मितं शून्यमनेकमल्पवत्।
प्रतिक्षणापूर्वमिति स्वलक्षणं क्रियात्मकं भूरिकलं महागुणम् ॥ ७ ॥

४ रसोऽमृतं नामबलं तु मृत्युर्बलं न चेत् स्याद् रस एव किं स्यात्।
रसो न चेत्स्यात् कबलं तु तिष्ठेत् तस्मादिमौ नित्ययुतौ हि धर्मौ ॥ ८ ॥

५ न चासतः संभवतीह भावः सतोऽप्यभावो न मतः कथंचित्।
प्रदृश्यते तूभयथाऽपि तेनामृतं च मृत्युं च पृथग्द्विधाहुः ॥ ९ ॥

६ स्थितिर्न यत्रास्ति तथा न गच्छद् गतिर्न यत्रास्ति न वा स्थितं तत्।
एकात्मकं तत्परिवर्तशीलं विरुद्धधर्मद्वययोगि मर्त्यम् ॥ १० ॥

७ वेगेन धावन्नपि तत्र तत्र स स्थिरः स्थिरः सन्नयमत्र धावति।
स्थित्या च गत्या युगपत् स युज्यते ततस्तयोर्योगकृतः स सिध्यति ॥ ११ ।

८ प्रातिस्विको वस्तुनि यः प्रतीतो विस्तार एषोऽत्र तदन्यवस्तु।
कदापि नैति प्रतिरुद्धधर्मा नातो बहिर्यान्ति स तस्य देशः ॥ १२ ॥
घटस्य नाशेऽपि घटस्य बुद्धिर्न नश्यतीयं वद तत्र बुद्धिः।
कं गृह्णती तिष्ठति योऽत्र बुद्धेर्ग्राह्यः स विज्ञानमयो घटः स्यात् ॥ १३ ॥
बहिर्घटस्यान्तरितो घटोऽयं भवेत् प्रतिष्ठा स हि तत्र तिष्ठेत्।
तदान्तरं ज्ञानमयं प्रतीयात् तस्मिन् घटः कर्ममयोऽस्ति बाह्यः ॥ १४ ॥
बाह्यो घटोऽन्योऽन्तरितो घटोऽन्यो बाह्यस्तु नाश्योऽन्तरितो न नाश्यः।
यथान्तरं पश्यति कुम्भकारस्तथा विनिर्माति बहिर्घटं सः ॥ १५ ॥

ज्ञानात्मकुम्भं मनसा दधानो बलं प्रयुङ्क्ते स यथा मृदेषा ।
पात्रेऽम्बुवद् ज्ञानघटस्य तस्याकृतौ प्रतिष्ठां लभते प्रविश्य ॥ १६ ॥
यदा घटं पश्यति कोऽपि तर्हि स्वान्ते न गृह्णाति स आन्तरं तम् ।
रूपादिकं प्रात्ययिकं तथाक्षैर्गृह्णाति सन्तं न तु बाह्यमर्थम् ॥ १७ ॥
योऽत्रान्तरे बाह्यघटस्य कर्म्मद्वारान्वयस्तां प्रवदन्ति सत्ताम् ।
बाह्ये घटे चान्तरितस्य दृष्टिद्वारान्वयो यस्तदमुष्य भानम् ॥ १८ ॥
कर्मानुरोधेन विभाति सत्ता ज्ञानानुरोधेन तदस्ति भानम् ।
तस्मादिमे विश्वजनीनरूपे न ज्ञानकर्म्मव्यतिरेकतः स्तः ॥ १९ ॥

९ सदस्ति सिद्धं किल भाति सिद्धं त्वसद् द्विधा यत् सदसत्तदुक्तम् ।
अस्तिर्हि भात्याऽनितिभातिरस्त्या तस्मादिदं सर्वमसच्च सच्च ॥ २० ॥

१० यदुक्तमानन्त्यमनर्थमस्मिन् द्वैते न तत्साधु चतुर्भिरेव ।
सिद्धेस्त्रयाणां हि चतुर्थमेवं तृतीयमेषां तु विभाजकं स्यात् ॥ २१ ॥
अथापि यद्रूपमियं हि माया सैषा तृतीयैव विभाजिका स्यात् ॥
माया सती चाप्यसती न सत्त्वं न वा पृथक्त्वं द्वितयादमुष्मात् ॥ २२ ॥
रूपं हि तत्सत् तदसच्च रूपं रूपा हि रूपस्य पृथक्त्वसिद्धिः ।
कुतस्तदानन्त्यमथो तृतीयं कुतः स्वतो द्वैतमिदं हि सिद्धम् ॥ २३ ॥

११ वैनाशिका नास्तिकसंज्ञकास्ते येषां विनश्यत्स्वविनाशि नास्ति ।
स ईश्वरो नास्त्यविनाशि संज्ञस्तदङ्गवेदोऽप्यत एव नास्ति ॥ २४ ॥
अथास्तिकास्ते प्रभवन्ति येषां गूढं विनश्यत्स्वविनाशि चास्ति ।
ततोऽविनाशी परमेश्वरोऽस्ति वेदश्च तस्य प्रतिपत्तिरस्ति ॥ २५ ॥

इति द्वैताद्वैतवादाख्यः सदसद्वादपक्षस्तृतीयो विकल्पः ॥

इति मधुसूदनविद्यावाचस्पतिप्रणीते ब्रह्मविज्ञानशास्त्रे सदसद्वादे
प्रकृतिस्फोटाधिकारः संपूर्णः ॥ २ ॥

---

इति सदसद्वादस्य द्वितीयं प्रस्थानं प्रकृतिविमर्शाख्यम् ॥ २ ॥

अथ सदसद्वादे तादात्म्यवादविमर्शे त्रिविकल्पे—

# भिन्नाभिन्नवादाधिकरणात्मको रसबलैकात्म्यसिद्धान्तः ।

## ( सिद्धान्त-संप्रत्ययः )

---

१ ब्रह्मैव तत् कर्म तदन्यदस्मात् कर्मेति निर्धारयितुं न शक्यम् ।
ब्रह्मैव यद् ब्रह्मणि नित्यमेतन्न ब्रह्म तत् प्राङ् नयतो न पश्चात् ॥ १ ॥
रसाद्बलं वा बलतो रसो वा रसो बलं चेत्युभयं पृथग् वा ।
द्विरूपमेकार्थमिदं द्वयं वा न संशयोऽत्र क्रियतामितीत्थम् ॥ २ ॥
रसाद्बलं नो बलतो रसो नो कथं न्वसत् सत् सदिदं नु वाऽसत् ।
नैकान्ततस्तद्द्व्युभयं पृथक् स्याद् यतो विनाभाव इहात्मशक्त्योः ॥ ३ ॥
एकं हि यद्ब्रह्म किलानिरुक्तं तस्यैव रूपद्वितयं निरुक्तम् ।
तस्माद्द्वयं भिन्नमभिन्नमेतन्नित्यो रसस्तत्र बलं त्वनित्यम् ॥ ४ ॥

२ यद्भाति तद्भाति बलं रसात्मना कथं त्वसत् सन्न रसोऽत्र यौति चेत् ।
यद्भाति किञ्चित् रस एव भाति तदुक्तं तु सूर्य्येत्विपि रूपवद् बलम् ॥ ५ ॥
यत्रार्जुनं किञ्चन काचपात्रं रक्तद्रवेण क्रियते प्रपूर्णम् ।
तत्रेष्यते रक्तमिदं द्रवेण द्रवे स्थिरत्वं तदमत्रयोगात् ॥ ६ ॥

३ बलं न यत्र प्रतिपद्यते किमप्यात्मा स नास्ति स्वयमस्ति तद्बलम् ।
अथो बलेनाक्रमतैष चेत्कचित् तत्रात्मनैवाक्रमतेति भाषते ॥ ७ ॥
अनन्यतामेव तु वक्तुमिच्छन् स आत्मनैवाकुरुतेति वक्ति ।
तज्जन्मलाभं प्रतिवक्तुमिच्छंस्तदात्मलाभं व्यपदिश्य वक्ति ॥ ८ ॥
कर्माकरोत् कर्म च जन्म लेभे तत्रायमाधीयत आत्मशब्दः ।
तेनायमात्मा न पृथक् पदार्थः संभाव्यते स्याद्बलमेष आत्मा ॥ ९ ॥
अथो पृथग् भूतबलं नु मन्यसे तस्मिन् रसो न्वेति न चाथवा क्वचित् ।
यदा बलेऽन्वेति रसो बलान्वये स्यात्किं बलं तत्र ऋते तदात्मनः ॥ १० ॥
अन्योन्यमेवं व्यपदेशसंक्रमाद् बलं रसो वा रस एव वा बलम् ।
न चान्यता वा न तयोरनन्यता कथं तदस्तीति मुहुर्विचिन्त्यताम् ॥ ११ ॥

इति तादात्म्यविमर्शे रसबलैकात्म्यवादः ॥ ( सदसद्वादः )

---

## बलसारताधिकरणम् ( असद्वादः )

१ अत्राहुरेके यदि चेदभिन्नं भिन्नाभिमानोऽस्ति वृथा विरोधात् ।
भिन्नं द्वयं तत्तदभिन्नमेकं कथं भवेत्तद्बलमेकमस्तु ॥ १२ ॥

२ बलं त्रिधा स्यादतिशायि किञ्चित् प्रकृष्टमन्यच्च निकृष्टमन्यत् ॥
तत्र प्रकृष्टं च निकृष्टमेते मिथः क्रमेते त्वतिशायि निष्ठे ॥ १३ ॥
आत्यन्तिकक्षोभवशात् स्थिरत्वं प्रतीयते यत्र बलेऽतिशायि ।
तत्स्यात् तदाभाति नितान्तशान्तं किन्तूत्कटश्रान्तिमिदं प्रविद्यात् ॥ १४ ॥
एतत् स्थिरत्वं प्रतिपत्तिहेतुः सर्वत्र नत्वत्र रसोऽस्ति भिन्नः ।
बलं बलं सर्वमिदं बलानामन्योन्यसर्गादिह सृष्टयः स्युः ॥ १५ ॥
यद्वा कदाचित् त्वतिशायिनीदं बलं प्रकृष्टं यदि वा निकृष्टम् ।
आक्रामतस्तत्र बलस्वभावाद्विलीयमाने भवतो न भातः ॥ १६ ॥
तद्वेतदेवात्थरसे प्रसुप्तं बलं न सुप्तं तदिदं रसे स्यात् ।
कस्मादकस्माद्बलमुत्थितं स्यादस्माद्रसाच्चेन्न रसो बलं स्यात् ॥ १७ ॥
अथ प्रकृष्टं च निकृष्टमेतद् द्वयं स्वतोऽनन्तमपि द्विधा स्यात् ।
मिथोऽनुकूलप्रतिकूलभेदात् ततोनुसृष्टिप्रतिसृष्टिसिद्धिः ॥ १८ ॥

३ बलानि नानाविधखण्डवन्ति स्वभावतोऽर्चन्ति चरन्ति सन्ति ।
तत्राऽधिकेऽल्पस्य लयात् समत्वे त्वन्योन्यमर्द्दान्नबलप्रकाशः ॥ १९ ॥
लोकेऽवलोके च बले बलस्यानुवेलमुग्रे विलयं शिलादौ ।
बलोदयश्चोग्रबलापलापे कल्पादिकालेऽपि ततस्तथा स्यात् ॥ २० ॥
अथार्चतां संचरतां बलानां कदाचिदुग्राद्बलतः पृथक्त्वे ।
स्वरूपतः स्यादुदयः प्रचारस्ततः कृतार्थस्य पुनर्निपातः ॥ २१ ॥
इत्थं बलादेव बलोदये स्थिते रसात्तदाख्यानमसत् प्रतीयते ।
प्रत्यक्षतोऽर्थो यदि नोपपद्यते तदा परोक्षं प्रतिपत्तुमीहते ॥ २२ ॥

४ बलं रसादुद्भवतीति चेन्मतं स्यात्पञ्चधात्राऽनुपपत्तिरुत्थिता ।
१ रसाद्बलस्योद्भवने बलं नु किं बलं विना किं न सदा बलोदयः ॥ २३ ॥
२ यस्मिन् बलस्योदय इष्यते स चेद् घनो रसस्यास्ति तदा ततः सदा ।
रसाद्रसः स्यादुदिता बलं कथं घनो बलस्यास्ति स चेद्रसो न सः ॥२४॥
३ सतो बलस्योदय इष्यते वा तत्रासतो वा न किलासतः स्यात् ।
असंभवात् तत्र सतोऽथवा चेद् द्वैतं वृथा स्याद् बलमेकमस्तु ॥ २५ ॥
४ खवत् त्वसङ्गः स रसः पृथक् चेद् व्यर्थो बलादेव जगत्प्रसृष्टेः ।
आरम्भणश्चेत्स समन्वयात्स्यात् सनाक्रियः स्याद्बलमेव कुर्वत् ॥ २६ ॥
५ उक्तानि चाष्टादशधा बलानि न तत्र कुत्रापि रसोपयोगः ।
सर्वं परस्थानगतं बलं वा स्वस्थानगं वा जगतः स्वरूपम् ॥ २७ ॥

इति तादात्म्यविमर्शे बलसारतावादः ॥ ( असद्वादः )

# रससारताधिकरणम् ( सद्वादः )

१ अत्रोच्यते बालकवत्प्रभाषसे यदात्थ सर्वं बलमस्ति नीरसम् ।
बलं न कुत्राप्यरसं प्रदृश्यते न जातु वाऽनात्मतयोपपद्यते ॥ २८ ॥
लेलायते पश्य चिरायतेऽयं हस्तोऽथ हस्तो यदि नास्ति कस्तु ।
कम्पेत कम्पोऽपि स किं पुनः स्याज्ज्ञानात्मकर्म्माणि मनस्यपि स्युः २९ ॥
यत्कम्पितं पश्यसि तत्र कम्पो यत्रोदितस्तिष्ठति नास्ति वातम् ।
कम्पाश्रयं कम्पविभिन्नमर्थं पश्यन्न पश्यस्यतिचित्रमेतत् ॥ ३० ॥
अथास्तु तावद्बलमेव कम्पाश्रयो बलं तच्च बलाश्रितं स्यात् ।
आद्यं तु शुद्धं बलमस्त्यसारं न संभवेदात्मविनाकृतं चेत् ॥ ३१ ॥

२ अथो पुनर्यद्व्यतिशायि किञ्चिद्बलं प्रशान्तं परिपूर्णमात्थ ।
तदेव मन्ये रसमन्यधर्मं शश्वत् प्रशान्तं न बलेऽस्ति शान्तिः ॥ ३२ ॥
ततो द्विधारूपममुष्य मन्मो यस्तत्र नित्यैकरसो रसोऽसौ ।
अथास्ति यद्भिन्नरसं विकुर्वद् रूपं पृथक्त्वादिव तद्बलं स्यात् ॥ ३३ ॥

३ यत्वब्रुवन् केऽपि बलोपमर्दात् क्षोभाप्रकाशो रसभावरूपम् ।
बलात् पृथक्कोऽपि रसोऽस्ति नेति तदप्यविज्ञानमिव ब्रुवन्ति ॥ ३४ ॥
स्वरूपतो यत्र बलप्रकाशः प्रदृश्यते तत्र च दृश्यतेऽयम् ।
रसः पृथग्भूत इव प्रशान्तस्तमेतमर्थं नु रसं वदामः ॥ ३५ ॥
स्थितिर्न यत्रास्ति तथा न गच्छद् गति र्न यत्रास्ति न वा स्थितं तत् ।
एकैकमेवं परिवर्तशीलं विरुद्धधर्मद्वययोगि सर्वम् ॥ ३६ ॥

( १ )

४ रसाद्बलस्योद्भवने बलान्तरं नापेक्ष्यते किन्तु बलं स्वभावतः ।
प्रतिक्षणं प्राणदपानदीक्ष्यते तस्योदयश्चास्तमनं च सूर्य्यवत् ॥ ३७ ॥
तस्नोदितेऽस्मिन् सवनत्रयं यथा तथा भवेदस्तमिते च तत्रयम् ।
रसोदरेऽन्तर्हितमस्तवद्भवे तत्सुप्तमुक्तं न तु निष्टमिष्यते ॥ ३८ ॥
तत्प्राणनेऽन्या तदपाननेऽन्या सीमानतामेति बलं विलङ्घ्य ।
बलं विपर्येति परीत्य सीमा ततोऽस्तमेति क्च वाऽभ्युदेति ॥ ३९ ॥
तत्रायमेतस्य बलस्य चोदयो यतोऽथ यस्मिन् पुनरस्तमेति तत् ।
सोऽयं बलास्तोदयसीमतामितो ध्रुवं तदन्योऽभ्युपगम्यते रसः ॥ ४० ॥
न प्राणनापानवृत्तिरूपतामपेक्षतेऽस्तोदययोर्बलस्य यः ।
स्यात्तन्मते नोदनया बलोदयो बलक्षयश्चेति बलस्य हेतुता ॥ ४१ ॥
उत्तेजकोत्तेजनया प्रवर्तते रसे बलादेव बलोदयः सदा ।
उत्तेजकं सर्वविधं बलं भवेदिच्छातपःश्रान्तिबलं तु मूलतः ॥ ४२ ॥

( २ )

५ यस्मिन् बलस्योदय इष्यते सदा स पुरुषोऽयं बलवद्रसोहि सः ।
घनो रसस्यैष बलस्य वा घनस्ततो रसोपेतबलः सदोदियात् ॥ ४३ ॥

( ३ )

६ सतो बलस्योदय इष्यते वा तत्रासतो वेति वृथा विचारः ।
अन्वक्षमीक्षे तु बलोदयं तं रसात्ततस्तं प्रभवं वदामि ॥ ४४ ॥
यथाऽयसः किट्टमसूत लूता तन्तुर्यथा फेनचयो जलेऽभूत् ।
तथा रसादेव सतो विभेदादुद्भूय रूपं बलमत्र तस्थौ ॥ ४५ ॥
अथाऽयसः किट्टसमुद्भवे स्यादन्योऽपि हेतुर्न तु कोऽपि तस्मात् ।
रसाद्बलोत्पत्तिविधानहेतुर्बलोद्भवान्नास्ति रसस्य हानिः ॥ ४६ ॥
तत्रैवमत्रैवमिति प्रभेदे हेतुस्तु को नाम ऋते स्वभावात् ।
ईक्षे यदन्वक्षमतः स्वभावं तथा विधं तत्र निरूपयामः ॥ ४७ ॥
स्थिता पुरस्तादिह मक्षिकेयं विष्वग्धदेहोत्प्लवते स्वयं सा ।
तत्रोत्प्लवायात्र बलं शरीरे कुतो भवेदात्मविना कृतं चेत् ॥ ४८ ॥
इच्छात्मलिङ्गं हि यदेच्छतीयमुत्तिष्ठते तत्क्षणमेव तस्मिन् ।
बलं ततस्तस्य शरीरमेतद्बलानुसारेण यतस्ततः स्यात् ॥ ४९ ॥
सूर्यांशवः काचवशाद् घनत्वेऽपूर्वाग्निरूपेण भवन्ति तूले ।
तदग्निरूपं कुत आगतं स्यात् क्वा विलीयेत ऋते तदंशः ॥ ५० ॥
तथा विभुर्यो हि रसोऽस्ति तस्मिन्नवं नवं नित्यमुदेति यद्यत् ।
बलं स्वभावादिव तेन सर्गाद् भावो बभूवाभिनवो बलेन ॥ ५१ ॥
बलं च तत्तत्पुनरेव तस्मिन् विलीयते तेन तदन्वयात्मा ।
भावोऽपि सर्गो बलमन्यमुष्मिन् रसेऽप्ययात्स्याद्रस एव भूयः ॥ ५२ ॥

( ४ )

७ यदास्य चाऽसङ्गसमन्वयो न प्रसर्गहेतुर्भवतीति तन्न ।
निरञ्जनाकाशसमन्वयेन प्रायः समस्तं भवतीह वस्तु ॥ ५३ ॥
यत्रापि सुश्लिष्टतमा इव स्युर्नितान्तरुद्धा अणवोऽश्मखण्डे ।
तेषां पृथक्त्वव्यवहारहेतुं तत्रान्तराकाशमुशन्ति विप्राः ॥ ५४ ॥
नो चेत् स आकाश इहान्तरे स्यात् तदाऽणवो नैव पृथक् स्थिताः स्युः ।
परः शतैरप्यणुभिः समेतैरनन्तरैः स्यादणुरेक एव ॥ ५५ ॥
तथा च नेयं पृथिवी न सूर्यो नेन्दुर्नवाऽन्योऽपि च पुद्गलः स्यात् ।
तस्मादणुस्थूलविशेषरूपा व्यक्तिस्तदाकाशसमन्वयात् स्यात् ॥ ५६ ॥
यदप्यवोचद् भगवान् कणादः पञ्चात्मकं नास्ति शरीरमेतत् ।
पञ्चात्मकं मास्तु तथापि तत्र व्योम्ना विनाऽङ्गायतनं कथं स्यात् ॥ ५७ ॥

( ५ )

८ अथेह मृत्योरमृतस्य सर्गान्मर्त्यं समस्तं परिदृश्यते चेत् ।
न मृत्युना वा न विनाऽमृतेन स्यादेतदेवंविधरूपजन्म ॥ ५८ ॥
सोमोऽमृतं मृत्युरिहाग्निरित्थं सर्वत्र वीक्षेऽमृतमृत्युसर्गात् ।
तत्राऽमृतस्यामृतमेव-मृत्योर्मृत्युस्तु मूलं प्रभवेद्विशुद्धम् ॥ ५९ ॥
पुनः पुनर्यन्म्रियतेऽमृतस्थं तन्मृत्युरूपं तदिहान्यथात्वम् ।
यत्त्वत्र तत्त्वं नयतोऽन्यथात्वं तद्रूपमेवामृतमाहुरार्याः ॥ ६० ॥

*

६ विना बलं नास्ति रसो रसेन विना बलं नास्ति पृथक् प्रदेशम् ।
एको हि सोऽर्थो बलवद्रसो यः प्रत्यक्षतः स्वानुभवैकगम्यः ॥ ६१ ॥
अनुद्भवे तस्य बलस्य लोपे चेदं यदा केवलमेकमस्ति ।
अहैव तन्नाम तदा वदामि बलोदये तच्च रसञ्च रूपे ॥ ६२ ॥
बलेऽसति त्वस्य सतो रसस्यान्वयो यदात्मन्वि तदा बलं स्यात् ।
रसस्तदात्माऽथ बलं तदस्य प्रख्यायते शक्तिरिति प्रभेदः ॥ ६३ ॥

---

इति तादात्म्यविमर्शे रससारात्मवादः ॥ ( सद्वादः ) ॥
इति मधुसूदनविद्यावाचस्पतिप्रणीते ब्रह्मविज्ञानशास्त्रे सदसद्वादस्य
तादात्म्यविमर्षाधिकारस्तृतीयः पूर्णः ॥
इति सदसद्वादस्य तृतीयं प्रस्थानं तादात्म्यवादाख्यम् ॥ ३ ॥

---

### अथ सदसद्वादस्याभिकार्य्यवादविमर्शे त्रिविकल्पेऽसद्वादः प्रथमो विकल्पः ॥

# असत्कार्यवादाधिकरणम् । (वैशेषिकमतम्)

१ अथास्तु तद्ब्रह्म पृथक् सदेव तच्चासदस्त्येकरसं यतो हि तत् ।
न यद् द्विरूपत्वमतो न तत्स्थलौ विपश्चितां विप्रतिपत्तिरस्ति हि ॥ १ ॥
किन्त्वत्र कर्म द्विरसे विवर्त्तते कदाचिदस्तीव कदाचिदस्ति नो ।
ततो विचारः क्रमतेऽत्र कर्मणि प्रदृष्टसत्त्वं स्वमथान्यतो हृतम् ॥ २ ॥
२ तत्राहुरेके यदसत्पुरा बलं तदेव पश्चात् सदिव प्रपद्यते ।
सन्तं यदात्मानमिदं करोति तत्स्वयं ततस्तत्सुकृतं निरुच्यते ॥ ३ ॥
यथास्ति मृत्स्ना न घटोऽस्ति तस्यामसन् घटस्तत्र दधाति सत्ताम् ।
घटो बलं कर्म च मृद्बलस्थं सत्तामुपादाय विभाति तावत् ॥ ४ ॥
यत्कार्यमुत्पद्यत एतदासीदसत् पुरा सद्भवतीह पश्चात् ।
वैशेषिकैरेष निरूपितोऽर्थो नैयायिकैश्चाभिमतोऽयमर्थः ॥ ५ ॥
३ असद्बलं तत्परसत्तया कथं संयुज्यतेऽसत् कथमत्र सद्भवेत् ।
इत्थं न चाशङ्क्यमिहोपपद्यते सर्वं यथा पश्यसि विद्धि तत्तथा ॥ ६ ॥
न द्यौर्न पृथ्वी न तदन्तरिक्षं न चान्यदग्रे किमपीदमासीत् ।
मनोऽकरोत् प्रागसदेवसत् तद्धूमस्ततोऽभूदभवत्ततोऽग्निः ॥ ७ ॥
ज्योतिस्ततोऽर्चिश्च मरीचयोऽतस्तस्मादुदारा अभवन्नथैषाम् ।
संघाततोऽभूदिदमभ्रवत् तत्पश्चात्समुद्रोऽभवदर्णवः सः ॥ ८ ॥
प्रजापतिस्तं पुनरन्वसृज्यत सोऽत्राप्स्ववापद्यत च प्रतिष्ठितः ।
पृथ्वी ततोऽभूदवमार्जनाद्वियद्योन्मार्जनाद् द्यौरियमूर्ध्वतोऽभवत् ॥ ९ ॥
एतद्धि लोकत्रयजन्म तत्र प्रजापतिस्तत्पृथिवीप्रतिष्ठः ।
पश्चात्प्रदेशेऽस्य तनूस्तमिस्रा बभूव तस्यामसुरा बभूवुः ॥ १० ॥
पक्षप्रदेशे दिनरात्रिसन्धिर्देहोऽस्य तस्मादृतवो बभूवुः ।
मुखप्रदेशे तु दिवैव देहोऽस्यासीदभूवंस्तत एव देवाः ॥ ११ ॥
ज्योत्स्ना तनूर्या जननेन्द्रियं तत् ततः प्रजा अत्र हि योनिजाः स्युः ।
रेतो हि सोमः पुरुषस्य तस्मादृतुप्रदानात् प्रभवन्ति जीवाः ॥ १२ ॥
तदित्थमस्मादसतो मनोऽभूत् प्रजापतिः स्यान्मनसस्ततश्च ।
प्रजा अभूवन्निति सर्वमस्मिन् स्थितं मनस्येव हि सा प्रतिष्ठा ॥ १३ ॥
श्वोवस्यसं नाम मनस्तदस्ति ब्रह्मेदमस्मादभवत् समस्तम् ।
※ यत् प्रागसत् तत्सदभूदिदानीमितीत्थमाहुः खलु तैत्तिरीयाः ॥ १४ ॥
यदस्ति किञ्चिन्निखिलं प्रजाते यज्जायते प्रागसदेतदासीत् ।
भोक्तुं मनो नास्ति तथास्ति पश्चादसन्मनः सद् भवतीति मन्ये ॥ १५ ॥
मनो हि रूपं न यदस्ति पूर्वं तदस्ति पश्चादसदेव तत्सत् ।
मनस्तदेवेदमशेषविश्वं श्वोवश्यसं नाम तदत्र तत्त्वम् ॥ १६ ॥

इत्यसत्कार्य्यवादः ॥

* (तै. ब्रा. २ कां. २ अ. ९ अनुवाकः)

अभिकार्य्यवादाधिकारे त्रिविकल्पे सद्वादो द्वितीयो विकल्पः ॥

# सत्कार्य्यवादाधिकरणम् । (प्राधानिकमतम्)

---

१ परस्तु तत्राह न चासतः कश्चित् सत्ताग्रहः संभवतीति भाव्यताम् ।
सदेव तत्रास्ति वलं रसस्थितं प्रादुर्भवत्यन्तरितं च जायते ॥ १ ॥
यत्कार्यमुत्पद्यत एतदासीत् स्वकारणे लीनमथाविरस्ति ।
२ त्रिकालसत् तन्न कदाप्यसत् तत् सांख्यैरभिज्ञैर्विदितोऽयमर्थः ॥ २ ॥
गृह्णन्त्युपादानमथेह सर्वं न भाव्यते कारणता च क्लृप्ता ।
शक्यं पुनः शक्तिमतैव कर्तुं नासत्कृतं स्यादिति सन्नु कार्य्यम् ॥ ३ ॥

३ असन्नु कार्यं यदि चाभविष्यद् वन्ध्यासुतोऽप्यत्र कृतो भविष्यत् ।
आकाशपुष्पाण्यपि शृंगमश्वेऽकस्मादपूर्वं नगरं कश्चित् स्यात् ॥ ४ ॥
असन्नु कार्य्यं यदि चाभविष्यद् तत्सर्वतः स्यादविशेषतो वा ।
स्युरेकतस्तान्यविशेषतो वा नोपाददीतेह नियम्य किञ्चित् ॥ ५ ॥
कार्य्यं स्वयोनौ यदि नाभविष्यच्छक्तिस्तदा केन निरूपिता स्यात् ।
निरूपितं केन च कारणत्वं वहिः सतामस्ति न कारणं तत् ॥ ६ ॥
४ सत्तावतामेव तु रूपहानादस्त्यप्रकाशोऽथ च रूपलाभात् ।
आविर्भवन्तीह पुनः कथंचित् स्वरूपहानाच्च तिरोभवन्ति ॥ ७ ॥
सतोऽतिदूरादतिसंनिधानान्नष्टेन्द्रियत्वादमनस्कतायाम् ।
सौक्ष्म्यादरूपात् व्यवधानतोऽभिभवात् समानाभिहृतेरलब्धिः ॥ ८ ॥
ये व्यंगुलप्रायखविप्रकृष्टे संछादके खे विधृते भवेताम् ।·
तदन्तरालाम्बरमध्यतारा न दृश्यतेऽनावरणापि दृष्ट्या ॥ ९ ॥

५ खण्डे शिलाया अपि हस्तमात्रे स्थितं जगद्रूपमवेहि सर्वम् ।
यस्यैव रूपावरणं पृथक् स्यात्तस्यैव रूपं पृथगाविभायात् ॥ १० ॥
अस्त्येव सूत्रेषु पटस्तथापि विश्लिष्टसूत्रेषु पटोपलब्धिः ।
नास्त्येव तेषां क्रमसंनिवेशे पटस्य सूत्रेषु सतः प्रकाशः ॥ ११ ॥
मृत्स्वेव वृक्षा अपि सन्ति किन्तु स्वांगानि विश्लिष्टतराणि तेषाम् ।
रूपं न यावत् क्रमवन्धनात् स्यात् तावत्सतामेव च नोपलब्धिः ॥ १२ ॥
यत्त्वाहुरेके नहि किञ्चिदासीदसत् पुरासीदसतोऽभवत् सत् ।
* तत्रार्थशून्याद्सतः कथं सत् भवेन्मतं साधु न तत्पतीमः ॥ १३ ॥

इति सत्कार्य्यवादः ॥ २ ॥

---

* ( छां. उ. )

अभिकार्यवादाधिकारे त्रिविकल्पे—

सदसद्वादस्तृतीयो विकल्पः ॥ ३ ॥

# मिथ्याकार्यवादाधिकरणम् । ( शारीरकमतम् )

---

१ यद्यासदेवेदमिहाग्र आसीदव्याकृतं नाम तदग्र आसीत् ।
नाम्ना च रूपेण च कर्मणा यत् स्याद् व्याकृतं तत्सदिति स्म केचित् ॥ १ ॥

२ यद्यासदेवेदमिहाग्र आसीत् ततः सदासीदिति तैत्तिरीयाः ।
सामान्यतः प्राहुरिहानुपाख्यं मा कारणं कार्यवदेव बोधि ॥ २ ॥
इत्यर्थमुद्दालक एतमर्थं व्याचष्ट सुस्पष्टमिहानुपाख्यम् ।
न कारणं नास्ति यतोऽर्थशून्यात् सर्गोऽत्र कार्यं तु पुरासदासीत् ॥ ३ ॥

३ प्राहुः परे कार्यमिहानुपाख्यं तत्कारणं तु द्विविधं प्रतीयात् ।
असच्च किञ्चित्सदपीह किञ्चिद् यः प्रागभावः स च कारणं स्यात् ॥ ४ ॥
सर्वं तु तत्कारणमर्थशून्यं नास्तीति तात्पर्यमिहारुणेः स्यात् ।
यत्प्रागभावः स घटो मृदोऽभूद् यत्प्रागसत् तत्मनसोऽखिलं स्यात् ॥ ५ ॥

४ पश्यन्ति केचिदिह तैत्तिरीये मते न कार्यं न च कारणं सत् ।
अथारुणिः पश्यति तद्विरुद्धं सत्कारणं तत्र सदेव कार्यम् ॥ ६ ॥

५ अथाहुरन्ये तु न सच्च चासद्बलं प्रतीयात् सदसच्च नैतत् ।
अथास्तु वा सर्वविधं यथेच्छं तत्सत् किलासत् सदसच्च विश्वः ॥ ७ ॥
निर्वक्तुमेतन्नहि शक्यते यत् तदित्थमेवास्ति न चान्यथेति ।
यः सर्वथा संभवतीदमेकं बलं ततो निर्वचनीयमेतत् ॥ ८ ॥

६ कर्मस्वकर्मस्थमकर्म कर्मसद् भिन्नं द्वयं सत् तद्भिन्नमद्वयम् ।
अकर्म भिद्येत न कर्म भिद्यतेऽध्यासोऽमृते स्यादिति षड्विकल्पनाः ॥ ९ ॥
घटो मृदि स्यान्मृदियं घटे स्यात्-भिन्नौ तु तौ वा मृदियं घटो वा ।
भिन्ना तु मृन्नैव घटस्तु भिन्नो घटो मृदध्यस्त इतीव विद्यात् ॥ १० ॥
इत्थं यतः कारणकार्यभावा मिथो विरुद्धा अपि षड्विकल्पाः ।
असंभवार्था अपि संभवन्ति कार्यं ततो निर्वचनीयमेतत् ॥ ११ ॥
अथापि वा कारणमेव कार्यं पृथक् तु मिथ्या भ्रमकल्पितत्वात् ।
ये यादृशाः कारणकार्यभावाः सर्वत्र तत्कार्यमलीकमीक्षे ॥ १२ ॥
युगाक्षचक्राणि धुरो वरूथोऽप्येतानि संहृत्य धृतान्यनः स्यात् ।
तेषां पृथक्त्वे तदनो न वीक्षे तस्मादनः कार्यमिति भ्रमोऽस्ति ॥ १३ ॥
वृक्षा वनं नाम भटा अनीकं संज्ञा पृथक् सा व्यवहारहेतोः ।
अन्यान्यवाचा व्यपदेशमात्राद् विकारधीः किन्तु न तत्र कार्यम् ॥ १४ ॥

लोष्टो घटः पिण्डकपालमित्थं केनापि रूपेण मृदो ध्रुवं स्युः ।
न कारणं कार्य्यमिहास्ति किञ्चित् पर्य्यायरूपाणि मृदस्तु तानि ॥ १५ ॥
बालाद् युवा स्यात्स्थविरस्तु यूनोऽवस्था इमाः स्युः पुरुषस्य भिन्नाः ।
तथा तृणाद्दुग्धमतो दधि स्यादेकस्य नाना प्रभवन्त्यवस्थाः ॥ १६ ॥

७ ये पार्थिवास्तत्र मृदेव सत्यं मृदोऽपि वार्य्येव ततोऽपि तेजः ।
वायुस्ततो व्योम ततस्ततोऽपि प्राणस्ततः सत्यमिदं मनोऽस्ति ॥ १७ ॥
अर्थक्रियाकारितया मनस्तत् सदस्ति तत् प्रागसदेव तत् स्यात् ।
यावन्न धत्ते विषयं तदानीमसद्भवेदार्थमुपेत्य तत् सत् ॥ १८ ॥
तस्मान्मनोऽसत् सदिति द्विधाहुर्मनः पुरासीत् तत एवमाहुः ।
नूनं सदेवेदमिहाग्र आसीदथा सदेवेदमिहाग्र आसीत् ॥ १९ ॥

इति सदसद्वादस्तृतीयः ॥ ३ ॥

इति मधुसूदनविद्यावाचस्पतिप्रणीते ब्रह्मविज्ञानशास्त्रे सदसद्वादस्याभिकार्य्यवादाधिकारः संपूर्णः ॥

---

इति सदसद्वादस्य चतुर्थं प्रस्थानमभिकार्य्यवादाख्यम् ॥ ४ ॥

## सदसद्वादस्य गुणवादाधिकारे त्रिविकल्पे—
## प्रथमोऽसद्वादविकल्पः ॥

# सदसत्पदार्थनिरूपणम् । (संज्ञाधिकरणम्)

---

१ रसं विना नास्ति बलं बलं वा विना रसो नास्ति विशुद्धवेषः ।
तस्मात्र तस्मिन् सदसद्विवादो धार्य्यः परत्रास्ति विवाद एषः ॥ १ ॥
विशिष्टरूपस्तु परा य आत्मा स पूरुषः सोऽव्यय उत्तमश्च ।
नित्यस्य तस्यात्मगुणास्त्रयः स्युस्तेषां हि पूर्वापरताविवादः ॥ २ ॥
प्राणो मनो वागिति तस्य रूपाण्येतानि नित्यानि न विप्लवन्ते ।
एषां त्रयाणामिह सन्ति नामान्येतान्यसद्वा सदसच्च सच्च ॥ ३ ॥

### १—असन्मूलकसृष्ट्यधिकरणम् ॥

२ यद्ब्राह्मणे शंसति तैत्तिरीये मनोऽसतोऽसृज्यत तत्र भाव्यम् ।
प्राणान्मनोऽभूदिति वर्णयन्ते प्राणा इदासत् तदिहाग्र आसीत् ॥ ४ ॥
अत्राहुरेते क्रमसृष्टिमेषां प्रजापतिर्वा इदमग्र आसीत् ।
सृष्ट्वा मनोऽसौ मन एव चासीत् सृष्ट्वाऽथ वाचं स हि वाग्बभूव ॥ ५ ॥
एषां मते प्राण इवैष पूर्वः प्रजापतिः प्राण इहोक्थरूपः ।
प्राणस्तु मृत्युः स मनोऽमृतं यन्मृत्योस्ततः सृष्टिरभून्मतेऽस्मिन् ॥ ६ ॥
स्थितिस्वभावं त्वमृतं स मृत्युर्गतिस्वभावः प्रथितस्ततोऽयम् ।
प्राणः स्वभावेन चलोऽस्ति मृत्युस्तस्मादसत्प्राण इति ब्रुवन्ति ॥ ७ ॥

३ सर्गोऽसतोऽभूदखिलो यथायं तथाग्निचित्या विषये महर्षिः ।
स याज्ञवल्क्यो भगवानवोचत् तदुक्तरीत्याऽत्र निरूप्यते सः ॥ ८ ॥
असद्धि सर्वं जगदग्र आसीदसद्यदासीदृषयस्तदासीत् ।
प्राणास्त उक्ता ऋषयो यतस्तेऽरिषंस्तपोभिः श्रमतश्च विश्वम् ॥ ९ ॥
यः प्राणमध्यः स इहेन्द्र उक्तः प्राणान् स इन्धे परितोऽन्वभीक्ष्णम् ।
प्राणास्त इद्धाः पुरुषा अभूवन् पृथक् पृथक् सप्त ततोऽधिका वा ॥ १० ॥
असंहितैस्तैर्न हि कश्चिदर्थः पृथक् पृथक् सर्गविसर्गवद्भिः ।
अन्योन्यसंसर्गवशात्तु सर्वे प्राणाः श्रियं सर्वविधां सृजन्ति ॥ ११ ॥
नाभेरवाङ्चोर्ध्वमिमे समौब्जन् द्वौ द्वौ तदित्थं पुरुषाः समेत्य ।
चत्वार आत्मा स युजोऽन्तरे द्वौ पक्षौ प्रतिष्ठा त्विह पुच्छमेकम् ॥ १२ ॥
तदित्थमेतान्पुरुषा न कुर्वन्नन्योन्यसंगात् पुरुषं तमेकम् ।
या श्रीरमीषामुदभूद्रसोऽसावूर्ध्वं समुत्थाय शिरोऽस्य जज्ञे ॥ १३ ॥
एकोऽधिकोऽस्त्यात्मनि पूरुषो यत्ततोऽयमुद्यच्छति पुच्छपक्षान् ।
नापेक्षते पुच्छमिमौ च पक्षौ स पूरुषो जीवति यावदात्मा ॥ १४ ॥

यः सप्तभिस्तैः पुरुषैः स पूरुषो ह्येकोऽभवत्तं प्रविदुः प्रजापतिम् ।
स एव चित्योऽग्निरयं स चीयते चिते निधेयोऽग्निरसौ शिरोरसः ॥ १५॥
देवाः श्रिताः सन्ति शिरो रसेऽस्मिंस्तत्रैव जुह्वत्यखिलेभ्य एभ्यः ।
चित्यः शरीरं शिर एवमात्मा नैकं विनान्येन कदापि तिष्ठेत् ॥ १६ ॥

४ स योऽयमेकः पुरुषः प्रजापतिः स्रष्टुं स ऐच्छत् स तपोऽप्यतप्यत ।
सोऽश्राम्यदस्मात्प्रथमं व्यजायत ब्रह्मप्रतिष्ठा प्रतरां त्रयीमयी ॥ १७ ॥
ऐच्छन्मनस्तः स तपस्त्वतप्यत प्राणेन वाचा तु कृतश्रमोऽभवत् ।
प्राणो यदा प्रक्रमते तदा ध्रुवं मनश्च वाक् संचरतः सहैव हि ॥ १८ ॥
प्रजापतिः प्राणमयः स आसीत् त्रयीमयी वाक् प्रथमं ततोऽभूत् ।
प्राणस्य ऋक्सामयजुर्मयी वाग्ब्रह्मप्रतिष्ठास्ति सतत्प्रतिष्ठः ॥ १९ ॥

"ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः ।
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥ २० ॥"

पुनस्तपोऽतप्यत वाक् प्रतिष्ठो वाचस्तु लोकादसृजद्धि सोऽपः ।
वागेव सासृज्यत नायदापः सर्वं यदाप्नोत् तत आप एताः ॥ २१ ॥
ऋक्सामयोः संप्रति तिष्ठतीदं प्राणयस्ति यत् स्थास्नु चरिष्णु किञ्चित् ॥
प्राणप्रभावाद्यजुपस्तु वाचोऽभवद्विकारः स इमा इहापः ॥ २२ ॥

५ प्रजापतिः प्राणमयः स विद्यया त्रय्याऽनया साकमथस्ततोऽविशत् ।
आण्डं ततोऽवर्तत तत्र चाग्रतो विद्यात्रयी ब्रह्म पुनर्व्यजायत ॥ २३ ॥
गर्भोऽन्तरासीदभवत्तु सोऽग्निर्विद्यात्रयी ब्रह्ममुखं तदग्नेः ।
तत्राश्रु यत् संक्षरितं स चाश्वः कपाललिप्तो रस उद्गतोऽजः ॥ २४ ॥
पृथ्वी तु तत्राण्डकपालमासीत् संक्लिश्य पृथ्वीं पुनरप्स्वविध्यत् ।
पराङ् रसोऽत्यक्षरदेष कूर्मोऽभवद्रसोऽन्यः समयौत्पृथिव्या ॥ २५ ॥
पृथ्व्याः समन्ताद्बहिरूर्ध्वमूर्ध्वं दध्याज्यमध्वादि रसाः स्रवन्ते ।
आदित्य एतानभिशं प्रवर्षन् करोति सृष्टिं स ततोऽस्ति कूर्म्मः ॥ २६ ॥
पृथ्वी तु सर्वापि ततोऽप एवानुव्यैदभूदेकमिवाप एव ।
फेनोऽभवत् तत्र तपःश्रमाभ्यां शोषान्मृदासीदपि चोपरूपम् ॥ २७ ॥
स्यात् सैकतं शार्करमश्मचायो हिरण्यमत्रौषधिवृक्षमासीत् ।
एता अभूवन्नवसृष्टयोऽस्यां साग्निस्त्रिवृत्तस्य चितिर्मतेयम् ॥ २८ ॥
त्रयी प्रयुक्त्या भवदण्डरूपं प्राणोऽश्रुवद्धो भवदग्निरन्तः ।
अपां प्रयुक्त्या भवदन्यमग्निर्वाक् प्राणतोऽन्या भवदत्र विद्या ॥ २९ ॥
अभूत् प्रतिष्ठेयमतोऽस्ति भूमिः पृथ्वी तु साथेन पृथुत्वमागात् ।
कार्त्स्न्येन चाग्निं समपादयत् सा ततश्च गायत्र्यभवत् प्रसिद्धा ॥ ३० ॥

६ प्रजापतिः प्राणमयः स पश्चात् सहाग्निनास्यामविशत् पृथिव्याम् ।
आण्डं ततोऽवर्तत तत्र चान्तर्गर्भो य आसीदभवत् स वायुः ॥ ३१ ॥
तत्राश्रु यत् संक्षरितं वयस्तत् कपाललिप्तस्तु रसो मरीचिः ।
कपालमासीत् तदिहान्तरिक्षं पोषाण्डमेतत् प्रथमाण्डवत् स्यात् ॥ ३२ ॥

७ प्रजापतिः प्राणमयोऽथ सार्द्धं स वायुना प्राविशदन्तरिक्षम् ।
आण्डं ततोऽवर्तत तत्र सोऽभूदादित्य एनन्तु यशो वदन्ति ॥ ३३ ॥
तत्राश्रु यत् संक्षरितं स चाश्मा पृश्निः कपालस्थरसस्तु रश्मिः ।
कपालमासीत् तदिहाभवद्द्यौर्यशोऽण्डमेतत् तदियं त्रिलोकी ॥ ३४ ॥
८ आदित्यसार्धश्च दिवं प्रजेशः स प्राविशत् तत्समवर्त्तताण्डम् ।
रेतो हि चन्द्रोऽभवदत्र तन्नक्षत्रमत्र क्षरितं यदश्रु ॥ ३५ ॥
कपाललिप्तस्तु रसो विदिक् स्यात् कपालमाहुस्तु दिशं तदित्थम् ।
अण्डानि चत्वार्य्यभवंस्त एते लोका दिशश्चेति विभिद्य विद्यात् ॥ ३६ ॥
९ नैतावता भावय चन्द्रबिम्बं तत्सूर्य्यबिम्बादपि चोर्ध्वदेशे ।
दिक् चंद्रसंवत्सरचन्द्रभेदाद् द्वेधे दिगिन्दुः परतः स्मृतोऽस्ति ॥ ३७ ॥
अग्निं प्रजातं वसवोऽनुजाता रुद्रा अभूवन्न तु वायुमेतम् ।
आदित्यमादित्यगणा अनुस्युर्विश्वे तु देवा अनुचन्द्रमासन् ॥ ३८ ॥
१० आरभ्य भूपृष्ठत आर्कदेशाद्दिवो विभागाः प्रभवन्ति सप्त ।
तावत् प्रदेशे व्यभवद्धि सोऽग्निस्त्रैलोक्यमेतत्परमो दिशः स्युः ॥ ३९ ॥
अग्निस्तरो यावदियं त्रिलोकी सोमस्तरस्तत्परतोऽस्त्यनन्तः ।
सोमोऽग्निमायाति तदन्नभोगात् पुष्टोऽग्निरुद्गच्छति सोमदेशे ॥ ४० ॥
खे वा यदूर्ध्वं विहगाः क्रमन्ते खे वा यदूर्ध्वं जलदाः स्रवन्ते ।
भूवायुरासीदिति यावदूर्ध्वं सा तावती द्यौः प्रथमास्ति सा भूः ॥ ४१ ॥
द्यौर्या तृतीयास्ति स तत्र चन्द्रो या सप्तमी तत्र विभाति सूर्य्यः ।
सप्तापि ताः साम रथन्तरं स्यादेतावतीयं पृथिवी प्रदिष्टा ॥ ४२ ॥
प्रजापतेः सा प्रथमा तनूः स्याद्रथन्तरं नाम ततः परस्तात् ।
वैरूपसामास्ति ततः परस्तात्स्याच्छाकरं साम मही त्रिवृत् सा ॥ ४३ ॥
एतावती वागियमस्ति पृथ्वी प्राणः स तत्रास्ति वितायमानः ।
चित्योऽग्निरेवैष शरीरमेतच्छिरस्तु योऽग्निः स सचिते निधेयः ॥ ४४ ॥
प्राणस्तदित्थं द्विविधः प्रवृत्तः शरीरमासीच्च शिरोऽन्यदासीत् ।
वाक् तच्छरीरन्तु मनः शिरस्तत्प्राणः स सृष्ट्वाऽविशदेतदेतत् ॥ ४५ ॥
११ एवं हि सूर्येऽपि दिवो विभागाः सप्तैव तत्रापि पृथक् त्रिलोकी ।
तथाग्नि सोमस्तरपङ्क्तिरेवं प्रजापतेरस्ति तनूस्त्रिसामा ॥ ४६ ॥
सूर्ये बृहत्साम पुरस्तदूर्ध्वं वैराजमस्योपरिरैवतं स्यात् ।
एकैकमेषान्तु रथन्तराणामेकैकमन्येष्वतिमन्यते तत् ॥ ४७ ॥
वाचो यथा सन्ति रथन्तराद्यास्तद्वन्मनांस्यत्र बृहन्मुखानि ।
द्यौरेतदेषा पृथिवी च पूर्वाऽऽद्यास्यौ मिथः संभवतः स्वभावात् ॥ ४८ ॥
१२ "सहस्रधा पञ्चदशान्युक्था यावद् द्यावापृथिवी तावदित्तत् ।
सहस्रधा महिमानः सहस्रं यावद्ब्रह्म विष्ठितं तावती वाक् ॥ ४९ ॥"
अग्निश्च वायुश्च रविश्च चन्द्रमा दिशश्च देवा इति पंचधा मताः ।
ते वाङ्मयाः प्राणमया मनोमया भवन्त्यतः पञ्चदशाहतानृचि ॥ ५० ॥
मनोमयाः प्राणमयाः सदैकतां गताः पृथङ्नैव भवन्ति कर्हिचित् ।
तद्ब्रह्मतद्यावति संस्थितं भवेदियं च वाक् तावति याति संस्थितिम् ॥ ५१ ॥

सहस्रधा पञ्चदशापि ते पृथक् भवन्ति तत्रापि सहस्रधा पुनः ।
तस्मिन् सहस्रे महिमान आसते संपद्यते तैरिदमण्डवद्वपुः ॥ ५२ ॥
१३ भूतानि पृथ्व्यां दिविदेवताः स्युः प्रजाः प्रजापत्यमिसृष्टरूपाः ।
देवेषु भूतान्यथ दैवतानि भूतेषु चोर्ध्वाधरतः क्रमन्ते ॥ ५३ ॥
अथात्र जीवा अपि भौतिकाः स्युः प्रजापतिस्तेष्वपि संनिधत्ते ।
स पूरुषः पूरुषसप्तकात्मा सोऽप्यत्र सृष्टिं तनुते तथैव ॥ ५४ ॥
प्राणेभ्य ऊर्ध्वेभ्य इयर्ति देवान् भूतान्यवाग्भ्यः स तनोति नित्यम् ।
भूतानि मर्त्या अमृता प्रजास्ताः स्युर्देवतास्ता अथ ऊर्ध्वमीयुः ॥ ५५ ॥
अध्यात्ममेता अपि देवता मनोवाक्प्राणचक्षुःश्रुतिसंज्ञिता मताः ।
चन्द्रो मनश्चक्षुरिनः श्रुतिर्दिशः प्राणोऽनिलो वागनलोऽत्र कथ्यते ॥ ५६ ॥
इमं निविष्टाः पुरुषं च पञ्च ताः पञ्चैपविष्टः पुरुषेऽपि देवताः ।
साङ्गः स आलोमनखाग्रमाप्यते सर्वाणि भूतानि तथाप्तिमन्ति हि ॥ ५७ ॥
मनोमयान् प्राणमयांश्च संहितानिह्योभयान् प्राणपदेन चक्षते ।
प्राणस्य वाचः परिवर्तनं मिथः संपद्यते सभिऋषिर्ब्रवीति तत् ॥ ५८ ॥

"एकः सुपर्णः स समुद्रमाविवेश स इदं विश्वं भुवनं विचष्टे ।
तं पाकेन मनसा पश्यमन्तितस्तं माता रेढि स उरेढि मातरम् ॥ ५९ ॥"

१४ सूर्येऽपि जीवाः प्रभवन्ति तद्वत् ते दैविकास्तान् प्रवदन्ति देवान् ।
प्रजापतिस्तेष्वपि संनिधत्ते सोऽप्यत्र सृष्टिं तनुते तथैव ॥ ६० ॥
भूतप्रजानां वपुषि प्रभूता भूतप्रभावाः प्रभवन्ति तद्वत् ।
देवप्रजानां वपुषि प्रभूता देवप्रभावाः स्युरपीन्द्रियाणि ॥ ६१ ॥
भूतप्रभावात् पृथिवीधृतास्ते स्थूलाश्च मन्देन्द्रियशक्तिबोधाः ।
देवप्रभावाद् द्युगताः परे तु स्युरीश्वरा ज्ञानबलेन्द्रियाढ्याः ॥ ६२ ॥
१५ सृष्ट्वा प्रजास्तत्र च सर्वमाजि विभूय विस्रंसत एष आत्मा ।
प्राणस्ततो ह्युत्क्रमतेऽस्य मध्यात् प्राणात्यये तं व्यजहुश्च देवाः ॥ ६३ ॥
अग्निस्ततस्तं प्रति संदधाति प्राणे हिते पूर्वमिव प्रजेशम् ।
प्रजापतिं तेन वदन्ति चाग्निं विस्रस्तपूर्त्यां सहि पूर्ववत् स्यात् ॥ ६४ ॥
विस्रंसते योऽस्य हि लोमचर्ममांसास्थिमज्जाभिहिताश्च तन्वः ।
विस्रंसिताः स्युस्तदिहाग्निचित्या चिताः पुनः प्राग्वदुपाहिताः स्युः ॥ ६५ ॥
संवत्सरस्तद्वदयं प्रजेशो विस्रंसिताश्चेद् ऋतवोऽस्य तन्वः ।
ता अग्निचित्या प्रचिताः पुनः स्युः प्राग्वत् ततः सोऽग्निरिहास्ति चित्यः ॥ ६६ ॥
वायुश्च योऽयं पवते समन्तात् प्रजापतिर्नाम स्रुतस्य तन्वः ।
विस्रंसिताः स्युर्हि दिशोऽग्निचित्या चिताः पुनः प्राग्वदिमा भवेयुः ॥ ६७ ॥
आदित्य एवैष चितेनिधेयोऽस्त्यग्निस्तदित्थं द्विविधोऽग्निरुक्तः ।
सर्वत्र चैवं क्रमशः प्रविद्यात् प्राणोऽयमग्निश्च प्रजापतिश्च ॥ ६८ ॥

## सन्मूलकसृष्ट्यधिकरणम्—

४ सत्तु प्रतिष्ठात्मकतत्त्वमाहुः सत्तामुपादाय तु जायतेऽर्थः ।
तस्मात्सदेव प्रथमं तदासीत् ततोऽभवत् प्राण इदं मनो वा ॥ ६९ ॥

सतस्तु तेजस्तत आप एता अन्नश्चोऽन्नमेता इह देवताः स्युः ।
सद्देवता तासु पुनः प्रविष्टा जीवात्मना तास्त्रिवृतोऽपि चक्रे ॥ ७० ॥
रूपैः स्थिता रोहितशुक्लकृष्णैस्तिस्रोऽपि तास्तेजसि यत्र कुत्र वा ।
नाग्नौ न सूर्ये न विधौ न विद्युति स्यात् तत्वमन्यत्किल रूपतत्रयात् ॥७१॥
यदन्नमश्नाति भवेत् त्रिधा तत् स्थूलं च सूक्ष्मं च ततोऽतिसूक्ष्मम् ।
क्रमात् पुरीषं पललं मनो वा पृथ्व्यां शरीरे दिवि यान्ति भोगम् ॥ ७२ ॥
आपश्च पीतास्त्रिविधा भवन्ति स्थूलाश्च सूक्ष्माश्च ततोऽतिसूक्ष्माः ।
मूत्रं त्वसृक् प्राण इति क्रमेण पृथ्व्यां शरीरे दिवि यान्ति भोगम् ॥ ७३ ॥
तेजोऽशितं वा भवति त्रिधा तत् स्थूलं च सूक्ष्मं च ततोऽतिसूक्ष्मम् ।
तदस्थिमज्जापि च वाक् च तत्र देहस्तः शरीरे दिवि वायुपैति ॥ ७४ ॥
देहं च पृथ्वीमनुयाति मृत्युर्देहं दिवं चामृतमेति रूपम् ।
अन्नान्मनः प्राण उदेति चाद्भ्यो वाक् तेजसस्ते ह्यमृताः प्रसादाः ॥ ७५ ॥
यथा हि दध्नो मथितस्य योऽणिमा तत्सर्पिरूर्ध्वं समुदीपति क्रमात् ।
तथाशितानां तदपन्नतेजसां प्राणो मनो वाक् समुदीपितानि च ॥ ७६ ॥
अनश्नतः पञ्चममुष्य तन्मनः क्षीणं कलामात्रमिवावशिष्यते ।
भूयस्तदन्नेन समाहितं क्रमादिद्धं समर्धेत मनोऽन्नजं हि तत् ॥ ७७ ॥
जलात् पतित्वापि दिशं दिशं नहि प्राणं क्वचित् प्राणनिबन्धनं मनः ।
यदा स्वपित्यस्य मनस्तदा सता सम्पद्यते तत् स्वमपीतमस्ति हि ॥७८॥
यथाश्वनायो वृषनाय एवं ह्यापोऽशनायास्तमशं नयन्ते ।
आपोमयः प्राण इतीदमन्नं तेनैव तत्रैव गृहीतमेति ॥ ७९ ॥
या चास्त्युदन्या तदिदं नु तेजस्तेजो हि पीतं नयतेऽन्तरम्बु ।
पीतोदकैः शाम्यति यर्हि तेजो नश्यत्युदन्या न तदोदपानम् ॥ ८० ॥
पश्यामि यत्किञ्च तदस्ति शुङ्गं तच्च प्रजायेत विना न मूलम् ।
मूलं भवेदन्नमथान्नमूलं त्वापो ह्यपां मूलमिदं तु तेजः ॥ ८१ ॥
तेजोऽपि शुङ्गं न भवेदमूलं यत्तस्य मूलं प्रवदामि तत्सत् ।
सदेव मूलं निखिलप्रजानां विद्यात्सदेवायतनं प्रतिष्ठाम् ॥ ८२ ॥
यः प्रैति तस्येह मनस्युपैति वाक् प्राणे मनः प्राण उपैति तेजसि ।
तेजस्तु यत्रात्मनि याति सोऽणिमा तत्सत् ततः सर्वमिदं बभूव ह ॥८३॥
नानात्ययानां भ्रमरैस्तरूणां रसानुपाहृत्य यथैकभावम् ।
नीते मधुत्वं गमिते लभन्ते नैते पृथग् वृक्षरसा विवेकम् ॥ ८४ ॥
एवं प्रजानामपि तान्यनन्तान्येतानि तेजांसि सति प्रपद्य ।
एकत्वमाप्तं किल निर्विशेषं तत्सत् ततः सर्वमिदं बभूव ॥ ८५ ॥
व्याघ्रोऽपि सिंहोऽपि वृको वराहः कीटः पतङ्गो मशकोऽपि दंशः ।
यद्यद्भवत्यत्र तदेकमूलं तत्सत् ततः सर्वमिदं बभूव ॥ ८६ ॥
यथा समुद्रात् प्रभवन्ति नद्यः पृथक् वहन्त्यो भुवि दिक्षु दिक्षु ।
समुद्रमेवान्वपियन्ति तद्वत् सतः प्रजाताः सति संभवन्ति ॥ ८७ ॥
आमूलवृक्षाग्रस्रवद्रसेन जीवेन वृक्षोऽस्ति स मोदमानः ।
जीवो हि यामेव जहाति शाखां स शुष्यतीयं म्रियते न जीवः ॥ ८८ ॥

न्यग्रोधवृक्षस्य फले प्रभिन्ने धानाः स्युरस्याश्च विभेदनेयम् ।
तत्राणिमानं न निभालयन्ते न्यग्रोध एषोऽस्ति महान् स वृक्षः ॥ ८९ ॥
प्रास्तं यथा सैन्धवखिल्यमप्सु व्याप्तं न दृश्येत पृथक् स्वरूपम् ।
बिन्दौ च बिन्दौ लवणं प्रतीमस्तथाणिमा सर्वगतोऽस्ति तत्सत् ॥ ९० ॥
एषोऽणिमात्मा विदुरैतदात्म्यं सर्वं तु तत्सत्यमतोऽतिरिक्तम् ।
न किञ्चिदत्रास्ति सदेवसृष्टेः पूर्वं सदेवाद्यसदेव पश्चात् ॥ ९१ ॥
यः कौरुपञ्चालकनीवृतिस्थितां ब्रह्माऽध्यतिष्ठत् समितिं यशस्विनीम् ।
स एष उद्दालक आरुणिः पुरा जगाद सद्वादमिमं स्वसूनवे ॥ ९२ ॥
अस्मिन्मते सर्वमिदं हि तेजोऽबन्नभेदात् त्रिविधं त्रिभक्तम् ।
त्रिवृत्कृतं तत्र तदेकमेकं तेषां सदात्मा सत एव सर्वम् ॥ ९३ ॥
२ त्रिवृत् क्रियायास्तु विधान्तरं यत् प्राहुस्तदत्र प्रतिपादयामः ।
सतोऽभवन् व्याहृतयो यतस्ताः सप्तेहते सप्तविधाः पदार्थाः ॥ ९४ ॥
तेजस्तथापश्च तथान्नमेवं प्रत्येकमेतत् त्रिविधं प्रतीयात् ।
तेजोऽन्नमप्तेज इदं न भिन्नं भवत् तथावन्नमथान्नतेजः ॥ ९५ ॥
तेजस्तथाऽपोऽन्न मितीहतेजस्तेजस्तथापोऽन्नमिति त्रिधास्ति ।
तेजस्तु तत्रापि च पर्य्ययं तत् तेजस्तथापोऽन्न मितित्रिधास्ति ॥ ९६ ॥
ततः सतो व्याहृतिसप्तकं स्यादूर्ध्वं तृतीयादखिलं तु तेजः ।
स्वतो गतिस्तेजसि सा क्रमेण द्वयोर्द्वयोस्तच्चरमेऽधिका स्यात् ॥ ९७ ॥
तेजस्तथापोऽन्नमिहान्नमेतत् तेजस्तथापोऽन्नमिति त्रिधास्ति ।
यदन्नमत्रापि च पर्य्ययेतत् तेजस्तथापोऽन्नमिति त्रिधास्ति ॥ ९८ ॥
ततः सतो व्याहृतयः प्रसिद्धाः सप्तान्नमेवास्ति तृतीयतोऽर्वाक् ।
स्थितिस्वभावोऽन्नगुणः क्रमेण द्वयोर्द्वयोस्तच्चरमेऽधिकः स्यात् ॥ ९९ ॥
आद्यं त्रयं तैजसमत्रमात्रैकैकात्रयाणामथ तेजसो द्वे ।
अन्त्यत्रयं त्वन्नवदत्रमात्रैकैकात्रयाणां द्विगुणान्नभागे ॥ १०० ॥
तेजोऽन्नमात्राद्वययुक्त्रयाणामेकैकमात्रा त्रितयेऽस्ति मध्ये ।
त्रयं त्रयं तैजसमाप्यमन्नं तेजोऽन्त्यमत्राद्यमपीह साम्यम् ॥ १०१ ॥
एषां त्रयाणामिह योगमात्रा वैषम्यतो व्याहृतयः सह स्युः ।
ताः सत्त सत्यं च तपश्च तद्वज्जनर्महः स्वश्च भुवश्च भूश्च ॥ १०२ ॥
प्राणस्तपः सत्यमदोमनांसि वाचोजनो वायुविभ्रामहः स्यात् ।
स्वः सर्वतेजांसि भुवस्तथापो भूरिप्यवे सर्वविधाः पृथिव्यः ॥ १०३ ॥
मनांसि तेजांसि च वाच आपः प्राणाः पृथिव्योपि च वायवश्च ।
व्यक्त्या च जात्या च भवन्त्यनेकप्रकारतस्तानि विविच्य विद्यात् ॥१०४
रूपैरमीभिर्जगदेतदेकं चराचरं व्याह्रियते समस्तम् ।
सद्व्यदो व्याह्रियते यदाभिस्तस्यादिमा व्याहृतयः प्रसिद्धाः ॥ १०५ ॥
वागेव सर्वं मनसाऽसुकाऽन्यच्चाद्यं महाकाशमिति ब्रुवन्ति ।
आकाशतो वायुरतोऽग्निरग्नेर्जलं जलान्मृद्भवतीति मन्ये ॥ १०६ ॥
नसोऽस्ति यस्मान्न भवन्ति शब्दाः परस्पराघातवशाद्बहिर्धा ।
वाग्बीजमेषां जनितास्ततस्ते सर्वत्र तस्मादुपलभ्यते वाक् ॥ १०७ ॥

मनस्तु भूमित्वमुपैति संचरे भूमिर्मनस्त्वं प्रति संचरक्रमात् ।
इत्थं क्रिये द्वे भवतोऽधिकाधिको बन्धश्च मोक्षश्च तयोःप्रवर्तते ॥ १०८ ॥

| | तेजः | आपः | अन्नम् | = भूतानि | उत्तरोत्तरस्थूलानि |
|---|---|---|---|---|---|
| १ | तेजः | ... | ... | = मनः ( प्रज्ञा ) | + १ एककलम् |
| ३ | आपः | ... | ... | = प्राणः ( सोमः ) | + २ द्विकलम् |
| ९ | अन्नम् = तेजः | | ... | = वाक् ( आकाशः ) | ३ त्रिकलम् |
| २७ | | आपः | ... | = वायुः | + ४ चतुष्कलम् |
| ८१ | | अन्नम् = | तेजः | = तेजः | + ५ पञ्चकलम् |
| २४३ | | | आपः | = आपः | + ६ षट्कलम् |
| ७२९ | | | अन्नम् | = पृथ्वी | + ७ सप्तकलम् |
| २१८७ | | | | | |

## सदसन्मूलकसृष्ट्यधिकरणम् ।

५ अथेदमग्रे ऽसदेवमासीत् सदेव नासीदथ यत् तदासीत् ।
* नैवैतदासीत् मन एव तत्प्रागासीन्मनो नैव हि सन्न चासत् ॥ १०९ ॥
मनो यथा तत्क्रियते तथोर्ध्वं यावन्मनस्तावदसच्च सच्च ।
मनोऽस्ति तत्सन्न वहिस्ततोऽसत् सर्वं मनस्येव कृतं वहिः स्यात् ॥११०॥
यत् तैत्तिरीया असतो मनोऽभूदित्याह राहुस्तदिदं स्वयम्भु ।
! सदो न चासीन्नसदो मनः प्रागासीत् सदः स्रष्टुमनोऽस्त्यकस्मात् ॥ १११ ॥
अर्थक्रियाकारितया मनस्तत् सदस्ति तत्प्रागसदेव सत् स्यात् ।
यावन्न धत्ते विषयं तदानीमसद्धदेवार्थमुपेत्य तत्सत् ॥ ११२ ॥
तस्मान्मनोऽसत् सदिति द्विधाहुर्मनः पुरासीत् तत एवमाहुः ।
नूनं सदेवेदमिहाग्र आसीदथा सदेवेदमिहाग्र आसीत् ॥ ११३ ॥
यत् प्रागसत् तत्सदभूदिदानीमितीत्थमाहुः खलु तैत्तिरीयाः ।
श्वोवस्यसं नाम मनस्तदस्ति ब्रह्मेदमस्मादभवत् समस्तम् ॥ ११४ ॥
न केवलं सृष्टिविधौ सिसृक्षामात्रेण बोध्यो मनसो नियोगः ।
आरम्भणं द्रव्यमपीह कृत्स्नं मनस्तदित्याह तु याज्ञवल्क्यः ॥ ११५ ॥
अमूर्तमासीदनिरुक्तमेतन्मनः क्रमादाविरभूत्तु मूर्त्यै ।
वाक्प्राणचक्षुः श्रुतयः क्रमात्तद्धृत्वाऽभवत्कर्म ततोऽग्निरेषः ॥ ११६ ॥
इमानि सप्तैव तु मूलरूपाण्येभिः समस्तं जगदाविरास्ति ।
प्रत्येकमेषां प्रथमं स्वमेव प्रामूर्छदेकं सदनेकमासीत् ॥ ११७ ॥
षट्त्रिंशदेकस्य सतः सहस्राण्यासन् स्वरूपाणि न तत्र पूर्वात् ।
तेषां प्रभेदोऽस्ति विभूतिरेषा विसृष्टिरेषा स्थितिवृत्तिरेषा ॥ ११८ ॥
यदन्यदन्यन्मनसश्च वाचः प्राणस्य चक्षुः श्रुतिकर्मणां वा ।
अहर्निशं संततमस्ति रूपं लोकप्रवृत्तौ तदियं विभूतिः ॥ ११९ ॥
संकल्पयन्ति ब्रुवते तथा यत् प्राणन्ति शृण्वन्ति विलोकयन्ते ।
कुर्वन्ति चिन्वन्त्यपि यत्तदेषामेषा कृतिः सा क्षितिरेवमेषाम् ॥ १२० ॥

---

* शत १०।५।१ ॥

अग्नेश्चितिः सा यदियं त्रिलोकी यत्पर्वतानोकहजन्तुवर्गाः ।
यः कश्च कायश्चितिरेव सोऽग्नेस्तदित्थमेतानि हि सप्त विश्वम् ॥ १२१ ॥
याग्नेश्चितिः सापि विना मनोऽस्तिनो मनस्थितोऽग्निर्मनसः स चीयते ।
सा जायते सप्तचितिश्चितिः क्रमात् पृथ्वीयमासामिह सप्तमी चितिः १२२ ॥
ये पार्थिवास्तत्र मृदेव सत्यं मृदोऽपि वार्य्येव ततोऽपि तेजः ।
वायुस्ततो व्योम ततस्ततोऽपि प्राणस्ततः सत्यमिदं मनोऽस्ति ॥ १२३ ॥
६ प्रजापतिर्नाम मनोऽस्ति तस्मादित्थं रयिः प्राण इमौ पृथक् स्तः ।
मनोवृतः प्राण उपैति रय्यामेषास्ति सर्वा रयिरेव मूर्त्तिः ॥ १२४ ॥
कात्यायनायेह कबन्धिने प्राङ् महर्षिराभाषत पिप्पलादः ।
यथैषतप्त्वा तप एतदग्रे प्रजापतिस्तन्मिथुनं ससर्ज ॥ १२५ ॥
प्राणं तमादित्यममूर्तमाहुर्मूर्तं तु चन्द्रं रयिमाहुरेतौ ।
संवत्सरे मासि दिने तथान्ने प्रजापतौ तस्थतुरर्द्धमर्द्धम् ॥ १२६ ॥
आदित्यमाह्वायनमुत्तराख्यं स देवयानोऽर्हति विद्यया तम् ।
चान्द्रं तु दक्षं पितृयाणमिष्टापूर्तादिभिः कर्म्मभिरेति मर्त्यः ॥ १२७ ॥
"द्वे सृती अशृणवं पितृणामहं देवानामुत मर्त्यानाम् ।
ताभ्यामिदं विश्वमेजत् समेति यदन्तरा पितरं मातरं च" ॥ १२८ ॥
यन्नागवीथ्युत्तरमस्ति सप्तर्षिभ्यस्तु यद्दाक्षिणमेष पन्थाः ।
स्यादुत्तरो याति ततोऽमृतं तं सूर्य्यं न चावर्तत एष तस्मात् ॥ १२९ ॥
उदक्त्वगस्त्यादजवीथितोऽवाक् स्याद्दक्षिणोऽयं पितृयाणमार्गः ।
प्रेतस्ततो याति तु चन्द्रमस्मादावर्तते कर्मवशात् पुनः क्ष्माम् ॥ १३० ॥
मास्याहुरादित्यमकृष्णपक्षं प्राणो हि सौषुम्ण उपैति तस्मिन् ।
कृष्णस्तु पक्षो भवतीह चान्द्रस्तस्मिन्नदृश्यो रस एति रय्याः ॥ १३१ ॥
दिने तु या रात्रिरिदं तमस्तच्चान्द्री रयिः सा तत एव मूर्तिः ।
अथेह यज्ज्योतिरहस्तदानीमादित्यतः प्राण इहोपयाति ॥ १३२ ॥
उद्यन्नयं सर्वत एव सर्वं प्रकाश्य गृह्णात्यखिलान्तरस्थान् ।
प्राणानयं रश्मिषु संनिधत्ते प्राणास्ततः संस्कृतिमाप्नुवन्ति ॥ १३३ ॥
"विश्वरूपं हरिणं जातवेदसं परायणं ज्योतिरेकं तपन्तम् ।
सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्यः" ॥ १३४ ॥
रसोमलश्चोद्भवतस्तथाऽन्नान्मलः क्षितिं याति रसस्तु देहम् ॥
रसस्यमृत्युस्त्वमृतं च भागौ भूतानि मृत्युस्त्वमृतं च देवाः ॥ १३५ ॥
प्राणोऽग्निरेवं रयिरेष सोमः सोमाद् घनत्वं तनुताग्नितः स्यात् ॥
अग्नेर्गतिः स्यात् स्थितिरत्र सोमात् ताभ्यामिदं विश्वमुदेति रूपम् ॥१३६॥

## ऐकात्म्यमूलकसृष्ट्यधिकरणम् ।

१ इत्थं विरोधेन वदन्ति पूर्वे मतत्रयं तत्र परे वदन्ति ।
यथा तु पश्यामि समन्वयेना विरुद्धमर्थं तमिह ब्रवीमि ॥ १३७ ॥

* प्रश्नोपनिषत् ।

प्राणप्रधानाथ मनःप्रधानाथ वाक्प्रधाना त्रिविधेह सृष्टिः ।
प्राणप्रधाने त्वसदग्र आसीदित्याह तद्वन्मनसीह वाचि ॥ १३८ ॥
पृथक् स्वमूलं प्रतिपादयन्ती भाषेयमस्यां न विवादलेशः ।
सद्वाप्यसद्वा सदसत्तथा वा स एक आत्मैव परः पुरासीत् ॥ १३९ ॥
प्रजापतिर्नास्ति मनो न वा वाक् न प्राण एतस्य हि ते गुणाः स्युः ।
यत्रैकमासां स परोऽक्षरो वा क्षरोऽथवा स्यात् स पृथक् प्रजेशः ॥१४०॥
यतस्त्रिधा ब्रह्म ततस्त्रिधाऽसौ सृष्टिः प्रदिष्टा निखिलं त्रिधाऽस्ते ।
आपस्तु वागस्ति मनस्तु सोमः प्राणस्त्रिरूपोऽयमिहाग्निरुक्तः ॥ १४१ ॥
अपां घनः स्यात् पृथिवी स चन्द्रः सोमग्रहोऽग्निग्रह एव सूर्यः ।
पृथ्वी हि वागस्ति मनस्तु चन्द्रः प्राणः प्रजानामयमस्ति सूर्यः ॥ १४२ ॥
प्राणो मनोवागिति ये त्रयोऽर्थाः सहैव सर्वे प्रभवन्ति नित्याः ।
एकोऽयमात्मा त्रिभिरात्मरूपैरेतैरिहाविश्य बिभर्ति विश्वम् ॥ १४३ ॥
सताऽसता चादितरूप एकः प्रजापतिर्विश्वमिदं विधत्ते ।
यथा तथा पश्यति याज्ञवल्क्योऽप्यर्काश्वमेधोद्भवनप्रसङ्गे ॥ १४४ ॥
यदस्ति किञ्चिन्न तदग्र आसीत् तन्मृत्युनाक्रान्तमशेषमासीत् ।
प्राणोऽमृतं मृत्युरपान उक्तोऽपानेन तेनावृतमेतदासीत् ॥ १४५ ॥

( श० १०।६।५ )

भुङ्क्तेऽन्नमेतेन तु मृत्युनैवापानेन तस्मादयदन्नमन्तः ।
तेनाशनायेति वदन्त्यपानं मृत्योस्ततोऽन्नं म्रियतेऽन्यसात्सत् ॥ १४६ ॥
केचिद्विदुर्मृत्युरयं य आसीत् सा चाशनायैव निरात्मिकासीत् ।

( श. १०।६।५ )

आत्मन्वितामैच्छदियं ततोऽस्या आपोऽग्निरर्कोऽभवदूर्ध्वमात्मा ॥१४७॥
नैतन्मतं साधु न चाशनाया विनात्मना संभवति क्वचित्सा ।
आत्मैव तु प्रागभवत् स एव त्वग्रेऽशनाया च स एव मृत्युः ॥ १४८ ॥
आत्मैव सर्वं स इहाग्र आसीदात्मानुवाक् प्राणमनोमयोर्थः ।
प्राणेन वाचा मनसा च हीनं न किञ्चिदासीदखिलं समं तत् ॥ १४९ ॥
तत्रास्ति निर्मातृ मनोऽथ साधनं प्राणोऽस्त्युपादानमियं तु वागिह ।
मनो भवेदायतनं तदक्षरे प्राणो बलं कर्म च वाग् विकारभाक् ॥ १५० ॥
प्राणक्रियार्थास्त्रिभिरेभिरुद्भवन्त्येकैक आत्मा प्रभवः स्थितिर्गतिः ।
यदत्र किञ्चिद् भवतीह तद्ध्रुवं प्रजायतेऽस्मात् पृथगात्मतः पृथक् ॥१५१॥
यावन्मनोवीर्यमुदैत् सकामः प्राणस्य वाचश्च तपःश्रमस्तत् ।
इच्छातपः श्रान्तिभिरेष आत्मा रेतोभिरेतत् सृजति स्वमङ्गम् ॥ १५२ ॥
प्राणो बलं तच्च मनोऽनुरूपं चरत्यमुष्यास्ति नियामकं तत् ।
यथावकाशो मनसोपपन्नो मात्राच्च रूपं च बलस्य तावत् ॥ १५३ ॥
प्राणो मनस्येव चरत्यभीक्ष्णं संचारमायाति न चामनस्के ।
प्राणो ह्ययात् प्राङ् मन एव गच्छेन्मनस्कृते प्राण उपैति भूयः ॥ १५४ ॥
आत्मा द्विधास्तीश्वरजीवभेदात् तत्रेश्वरैक्यं बहवस्तु जीवाः ।
प्राणो मनस्यैश्वर ऐश्वरेऽस्मिन् जैवे तु जैवः प्रचरेत् पृथग्वत् ॥ १५५ ॥

६ प्राणो द्विधा वृत्तिविशेषतोऽस्ति प्राणश्चपानश्चिह किन्तु स प्राक् ।
अपानवृत्तिर्विलयं प्रकुर्वन्नासीन्न तु प्राणवृत्ति किञ्चित् ॥ १५६ ॥
प्राणश्चयं प्राक् सरति प्रसारे कर्तुं घनं प्रत्यगपान एति ।
प्राणोऽन्यतोऽन्यत्कुरुते विदूरेऽन्यतोऽन्यदभ्यर्णमपानतः स्यात् ॥१५७॥
प्राणस्तु यः प्राणविशेष एतं स्पृतं विदुर्जीवयते स सर्वम् ।
सर्वाणि भूतानि स एव मृत्योः स्पृणोति तस्मात् स्पृतमेतमाहुः ॥ १५८॥
नैकान्ततो मृत्युरयं स्पृदेव वा विपर्ययेते नु परस्परेण तौ ।
एक प्रवाहेऽन्तरमन्तरं गतावुभौ क्रमेते इति हि स्थितिर्मता ॥ १५९ ॥
स्पृतः प्रवाहे जगतोऽस्ति सृष्टिर्मृत्युप्रवाहे प्रलयस्य कालः ।
पुरासदानीं प्रलयस्य कालस्तत्रावृणोत् सर्वमिदं स मृत्युः ॥ १६० ॥
( श. १०।६।५ )

यान्यात्मवाक् प्राणमनांसि तेषां प्राणो द्विधा स्यात् स्पृदपानभेदात् ।
किन्त्वात्मनो वाङ्मनसे अपानावृते तदास्तां न पुरास्पृदासीत् ॥ १६१ ॥
( श. १०।६।५ )

तस्मादपानावृत एष आत्मा सर्वोऽशनायामय एव मृत्युः ।
( श. १०।६।५ )

मनो यदाकर्षणवीर्यमन्यं विलापयत्यात्मनि साऽशनाया ॥ १६२ ॥
त्रिधाऽशनायाऽस्त्यशनाय येच्छा सा शंनयन्ती त्वपराशना या ।
अथाशनायान्तरयेत सान्या वीर्याणि वाक्प्राणमनःसुतानि ॥ १६३ ॥
स्यादन्तुरन्तर्निहितं यदाद्यं प्रख्यायतेऽत्रैव तदा न चाद्यम् । (श. १०।६।२)
अन्नं यदाच्छन्दयते तदाऽसौ शाम्यत्यपानः स्पृदुदेति तत्र ॥ १६४ ॥
सर्वोऽनुवेलं म्रियमाण एवाश्नात्यन्नमेतत् स्पृदमुं स्पृणोति ।
अग्रे तु सृष्टेर्न तदन्नमासीत् तन्मृत्युनैवावृतमेतदासीत् ॥ १६५ ॥
( श. १०।६।५ )

प्राणोऽस्त्यपानो न यदाऽन्नमस्मिंस्तदा स मृत्युर्म्रियमाणरूपः ।
रिक्तोदरं पूरयितुं मनो यत् सैषाशनाया परितस्तदासीत् ॥ १६६ ॥
( श. १०।६।५ )

७ किन्त्वस्य मृत्योर्न शरीरमासीद् वाग्वन्नवन्ना पृथगात्मतासीत् ।
तदन्नभोगायतनं शरीरं विनाशनायालमभून्न मृत्युः ॥ १६७ ॥
साम्यादमीषां पृथगात्मतायां नैकः परंभोक्तुमलं तदासीत् ।
ततः स्वयं केषुचिदेष्वकस्मादैकात्म्यभावाय मनोऽन्यदासीत् ॥ १६८ ॥
यात्रन्मितानां मन एकरूप्यादात्मन्वितायै समभूदमीषाम् ।
तावत् खमेषां मन एव साम्यात् प्राणश्च वाक् चैकतया बभूवुः ॥ १६९ ॥
तदित्थमैकात्म्यमभूदकस्मादेकोऽयमात्मा समभूदमीषाम् ।
मनो वशात् प्राण इहान्वितः सन् वाच्यन्वितायामयमेकवत् स्यात् ॥१७०॥
तदित्थमन्यान्यमनः प्रभावादैकात्म्यमासीदिदमन्यदन्यत् ।
तेष्वेषु वाक्प्राणमनःप्रमाणन्यूनाधिकत्वादभवन् विशेषाः ॥ १७१ ॥

नानाविशेषान्वयतस्तदैक्यं गुणं विदुस्तैश्च गुणैर्यदैक्यम् ।
तद्रूपमाहुः परमाणुनाम्ना तेभ्यस्त्रसोरेणुरतश्च भूतम् ॥ १७२ ॥
विशेषपूर्वेषु गुणाणुरेणुस्कन्धेषु सर्वत्र पृथक् पृथक् प्राक् ।
आत्मा य आसीद् विविधोऽथ योगादेकत्र सोऽर्चन्नचरत् प्रदेशे ॥ १७३ ॥
( श. १०।६।५ )

स्तोमः समूहः स यतस्तदर्चनं तदर्चनादृक् तदृचां विताननात् ।
सामाथ ऋक् साम समन्वयाद् यजुर्व्योमाथ वायुश्च यजुः समन्वितम् १७४
वाग् ब्रह्म वेदास्त इमे त्रयोऽपि ब्रह्मैव तस्माद्गुदभूत् प्रतिष्ठा । ( श. ६।१।१ )
तद्विद्यते विन्दन्ति तद्विदन्ति ब्रह्मैव सर्वं तदिदं यदस्ति ॥ १७५ ॥
नवेदतोऽन्यत् किमपीह दृश्यते यास्तावदापः पृथिवी तथाग्नयः ।
वेदा इमे वेदहिता इमेऽखिला यजुर्यदेषां तत एव सृष्टयः ॥ १७६ ॥
वागत्र तु व्योम स वायु 'यज्जु' र्यज्जुस्तदुक्तं हि तयोः प्रयोगात् ।
गतिस्थितिद्वैधगुणान्वयेन प्रजायते सर्वविधः प्रपञ्चः ॥ १७७ ॥
त्रिधा यजुर्वाग् विनियुज्यते सा तदुक्थमर्कोऽयमशीतिरेषा ।
मूलं स्थिरं त्वात्मनि किञ्चिदुक्थं प्राणान्वयात् तूलमिवोत्थितोऽर्कः ॥१७८॥
अर्कोऽशनायास्ति ततः सभिन्नात्मानं समाकर्षति तस्य वाचम् ।
उपादधात्मात्मनि तामशीतिं विदुः क्रमोऽयं नियतः समन्तात् ॥ १७९ ॥
विस्रंसते चोत्क्रमते च नित्यं कृशः परात्मन्यशना यथाऽर्कः ।
समाशनाज्जीवति हीयतेऽल्पादपूर्वमर्थं सृजति प्रभूतात् ॥ १८० ॥
९ सर्वासु सृष्टिष्वभवन् पुरस्तादापोऽथ पृथ्वी च ततस्ततोऽग्निः ।
कं ब्रह्म खं ब्रह्म च खं प्रदेशस्तत्राहि तं यत्किमपीह कं तत् ॥ १८१ ॥
यदेव किञ्चित् प्रतिपद्यते तत्कमुक्तमस्यायतनं खमुक्तम् ।
यदर्चतः कं समभूत् खगर्भे तदुक्थतः प्रोत्थितमर्कमाहुः ॥ १८२ ॥
उक्थं हि वाग्रूपमिहात्मनि प्रागव्यक्तमात्मांशतया यदस्ति ।
प्राणस्तदुत्थस्तदशीतिमश्नन्नुक्थे निजेऽर्चंश्चरतीह सोऽर्कः ॥ १८३ ॥
अद्यापि येनाशितमत्र पूर्वं घृतं तदास्या घृतसंस्कृतोऽभूत् ।
संस्कार उक्थं तत उत्थितोऽर्को घृताशमिच्छेन्न न संस्कृतश्चेत् ॥ १८४ ॥
१० प्रजापतिः प्राणऋषिः स पूर्वः स व्योमवाय्वात्मकवाक् समुत्थः ।
अर्कः परात्माशनतोऽस्य वाचाऽऽत्मना च स प्रागसृजत्तदापः ॥ १८५ ॥
अक्लश्यस्तदात्मन्यभवत् स मृत्युस्ताश्चाशनाया अभवंस्तदापः ।
( श. १०।६।५ )

आपः पुरस्तादयमर्क आसीदापोऽभवन् ह्यर्चत आत्मनः कम् ॥ १८६ ॥
( श. १०।६।५ )

आपोऽयमात्मा परमेष्ठिसंज्ञो व्योमन्यनन्ते परमे समन्तात् ।
व्याप्नोत् समस्तं जगदस्ति तस्मात्स्वेवाङ्गस्थ एवोदभवच्च सर्वम् ॥ १८७ ॥
सव्यसृसत् तस्य हि मध्यभागाद् व्युत्क्रम्य संवत्सरदेवभावान् ।
देवेषु वायुः पुनरत्र गर्भे प्रविश्य तत्प्राणतया बभूव ॥ १८८ ॥

यावत्पुनर्व्यस्रसदेष आत्मा तावत्पुनर्वायुरिहागतः स्यात् ।
प्राणा हि वायुः सकलाश्च देवाः प्राणाः स यज्ञः स हि वस्तुभावः ॥१८
११ अपामणूनां यदि वायुरात्माऽशनायितोऽर्चंश्चरतीह सोऽर्कः ।
वायुत्वमप्त्वं च सहैष भुक्त्वा करोति फेनाद्यवनीस्वरूपम् ॥ १९० ॥
आपः पुरा पुष्करपर्णमासन् प्राविध्यदप्स्वेतदतोऽत्र घनत्वम् ।
( श. ६।१।१ )

घनाभिरद्भिर्म्रियते तु वायुर्वायोरपां मूर्छनया च फेनः ॥ १९१ ॥
अपूफेनमृपः सिकता च शर्कराऽश्मायो हिरण्यं च भवेत् पृथिव्यसौ ।
( श. ६।१।१ )

अपां च वायोरपि तारतम्यतो द्रव्ये घनत्वेऽपि समन्वयेऽपि वा ॥१९२
प्रजापतिर्वायुरयं स आत्मा क्लिष्टो घनेऽस्मिन् मिथ आहतः सन् ।
अग्निः स्वयं भूरभवद् द्वितीयः प्रजापतिर्भूरस एष आत्मा ॥ १९३ ॥
सव्यस्रसत् तस्य च मध्यभागाद् व्युत्क्रम्य संवत्सरदेवभावान् ।
देवेषु चाग्निः पुनरत्र गर्भे प्रविश्य तत्प्राणतया बभूव ॥ १९४ ॥
प्राणास्ततस्तत्र बभूवुरेते स्तोमा विभिन्नास्तत एव नाना ।
( श. ८।३।५ चितिः )

इमानि रूपाण्यभवन् स यज्ञः स्तोमो न यज्ञेन विनास्ति किञ्चित् ॥१९५॥
( श. ८।४।३ )

आत्मानमात्मा प्रतिधाय तस्मिन् सर्वाणि भूतान्यभवत्स गर्भी ।
( श. ८।४।२ )

पाप्मा तु मृत्युः सहितान्यगृह्णाद् गर्भोह्यपानाद्विलयं गतः स्यात् ॥१९६॥
( श. ८।४।२ )

देवास्तथात्माप्यभवन् स्पृतोऽस्मिन् स्पृण्वन्ति गर्भे त इमे स्म मृत्योः ।
( श. ८।४।२ )

देधा द्विधा तत्र बभूवुरेके भागा अथान्ये त्वगुणाधिपत्यम् ॥ १९७ )
( श. ८।४।२ )

भागांस्तु वाचाधिपतींश्च कांश्चिच्चित्यां चतुर्थ्यां दश याज्ञवल्क्यः ।
भागैर्विकाराः स्युरथाधिपत्यं गता विकारान् परियान्ति बाह्याः ॥ १९८ ॥
१२ ये स्तोमभागा अथ यज्ञभागास्तत्रैव वेदा निहिता ध्रुवास्ते ।
अथाधिपत्यं गमितास्तु देवा न्यूनाधिकाः स्युर्व्यभिचारिणोऽपि ॥ १९९ ॥
यो जायते सोऽखिल एव तेभ्यो देवेभ्य एवासुरसंहितेभ्यः ।
प्रजायते तत्र यथा तु देवाः स्युः संनिविष्टाः समतोऽत्र यज्ञः ॥ २०० ॥
अपां शरो यत् समहन्यतैषा पृथिव्यभूत् तत्र रसोऽयमग्निः ।
स्पृष्ट्वा स पृथ्वीमखिलां समन्तात् सहस्ररश्मिर्बहिरत्यतिष्ठत् ॥ २०१ ॥
( श. १०।६।५ )
१३ त्रिधात्मात्मानमयं विधत्ते सोऽग्निः सवायुः सरविः क्रमेण ।
( श. १०।६।५ )

आद्योऽयमग्निः परतोऽस्य वायुस्ततः परस्ताद् रविसंनिवेशः ॥ २०२ ॥
प्राणास्त्रयस्ते क्रमसिद्धरूपा यकोऽग्निरेनं पशुमश्वमीक्षे ।
( श. १०।६।५ )
यत्रैव तत्रैव सदृश्यतेऽन्यः प्रतिष्ठितः सोऽप्स्वशनाय याकः ॥ २०३ ॥
( श. १०।६।५ )
प्राची शिरोऽस्योपदिशौ तथेर्मौ पुच्छं प्रतीची विदिशौ तु सक्थ्यौ ।
( श. १०।६।५ )
पार्श्वे दिशौ तूदरमन्तरिक्षं द्यौः पृष्ठमुर्वी तदुरःस्थलं स्यात् ॥ २०४ ॥
योनिः समुद्रोऽस्य मतोऽप्सु योनिर्बन्धुः समुद्रोऽस्य मुखं तथाग्निः ।
वैश्वानरो व्यात्तममुष्य सोमो रेतोऽस्ति संवत्सर एव सोऽश्वः ॥ २०५ ॥
पूर्वार्द्ध उद्यन् विचलन् परार्द्धः प्रोद्यन्तमश्वं महिमान्वहः स्यात् ।
( श. १०।६।४ )
प्रयान्तमश्वं महिमानु रात्री योनी तयोः पूर्वपरौ समुद्रौ ॥ २०६ ॥
( श. १०।६।४ )
१४ अथैष मृत्युः पुनरैच्छदात्मा मम द्वितीयोऽस्तु शरीरनामा ।
( श. १०।६।५ )
यावन्मनस्तावदपान एतां वाचं मनस्याश्रमयां चकार ॥ २०७ ॥
रेतांसि वाक् प्राणमनोमयानि यावन्ति संवत्सर एव तावान् ।
अभूत् पृथिव्या रसमग्निमेतं संवत्सरेऽस्मिन्नभृतैष मृत्युः ॥ २०८ ॥
( श. १०।६।५ )
अग्निः पृथिव्यस्ति तमेव मृत्युस्तत्राशनाया वशतो व्यकर्षत् ।
आक्रस्य सर्वा दिश एति स प्राग् देशं स संवत्सरनाम कालः ॥ २०९ ॥
संवत्सरादूर्ध्वमिहैतमग्निं स वाक्जज्ञाक् परितस्ततोऽभूत् ।
( श. १०।६।५ )
संवत्सरो वाङ्मय एष आत्मा जातं तमग्निं न जघास मृत्युः ॥ २१० ॥
संवत्सरेणापि तयापि वाचाऽसृजत् समस्तं यदिहास्ति किञ्चित् ।
छन्दांसि वेदानसृजत् सयज्ञान् प्रजाः पशूनप्यदितिः स सर्वान् ॥ २११ ॥
( श. १०।६।५ )
१५ यजेय यज्ञेन तु भूयसेत्यात्मैच्छत् ततोऽश्राम्यदृतप्यतापि ।
( श. १०।६।५ )
प्राणास्त्रयः सन्ति हि तस्य भर्गो महर्यशश्चाग्न्यनिलेन लक्ष्याः ॥ २१२ ॥
श्रान्तस्य तप्तस्य यशोऽनुवीर्यं तस्य व्युदक्रामदतस्तदानीम् ।
शरीरमस्य श्वयितुं बभूव तन्मेध्यमस्त्वित्यभवन्मनोऽस्य ॥ २१३ ॥
( श. १०।६।५ )
योऽर्कोऽग्निरेतस्य शरीरमश्वत् ततोऽग्निराख्यायत सोऽयमश्वः ।
यतस्तु मेध्यं तदभूत् स सूर्यो यशोमयोऽख्यायत चाश्वमेधः ॥ २१४ ॥
( श. १०।६।५ )

अश्वो हि देवानवहत् समस्तान् देवा द्विधा अग्निमयाश्च सौम्याः ।
अन्नादितस्तेऽग्निमयास्तु सौम्या अन्नानि चान्नाहुतयोऽत्र यज्ञाः ॥२१५॥
यज्ञः प्रजा जीवनमस्ति यज्ञोच्छेदादयं नश्यति जीवदेहः ।
यमो हि सोमाहुतिमग्निमध्ये व्याहन्ति चोत्सीदति तेन यज्ञः ॥ २१६ ॥
यत्राग्निरिन्धे सच यत्र यज्ञः प्रवर्तते देवमयोऽन्नभोगात् ।
स एष आत्मा बहुरूप एषामेकस्तु यज्ञः पृथगीश्वरोऽस्ति ॥ २१७ ॥
जीवाः पृथग् यज्ञविधा अनन्ता भवन्ति नश्यन्ति विपर्य्ययन्ते ।
एको महायज्ञ इहेश्वरो यः सोनाद्यनन्तोऽस्त्यविनाश्यसीमः ॥ २१८ ॥

इति मधुसूदनविद्यावाचस्पतिप्रणीते ब्रह्मविज्ञानशास्त्रे गुणवाद-
विकल्पः पञ्चमः संपूर्णः ॥ ५ ॥

इति सदसद्वादस्य पञ्चमं प्रस्थानं गुणवादाख्यम् ॥ ५ ॥

---

सदसद्वादे सामञ्जस्याधिकारस्य विकल्पेषु—

## प्रागभावसमुच्चितकारणवादाधिकरणम् । ( न्यायमतेन )

१ असत् पुरासीत् सदिदं ततोऽभूदित्याहुरेकेऽथ परेऽन्यथाहुः ।
आसीत् सदेवाग्र इदं ततोऽभूदित्यत्र नैवार्थविरोधमीक्षे ॥ १ ॥
यदस्त्युपादानमिदं सदुक्तं यः प्रागभावस्तदसाभिरुक्तम् ।
कार्य्योद्भवात् प्रागुभयं तदासीत् ततो यथेच्छं व्यपदेशयन्ति ॥ २ ॥
असीद्यदग्रे समवेत्य तस्मिन् नासीद् यदग्रे तदिदं प्रजज्ञे ।
यज्जायते प्रागसदेतदासीत् सत्त्वे तदासीत् समवायि तस्य ॥ ३ ॥
इत्यसद्वादः ॥ १ ॥

## संभूतिविनाशाधिकरणम् । ( सांख्यमतेन )

२ लयश्च सृष्टिश्च लयश्च सृष्टी रात्रिस्त्वहोरात्रिरहस्तथाग्रे ।
असच्च सच्चेदमसच्च सच्चेत्यावर्तते शश्वदनादिकालात् ॥ ४ ॥
आसीत्पुरा रात्रिरसत् तमस्ततः सत् प्रादुरासीदिति चक्षते परे ।
आसीत्तु सत् सृष्टिमयं दिनं पुरा ज्योतिस्ततस्तस्य तमः परे जगुः ॥ ५ ॥
नासीद्यथाभूदिति चैकधा मतिर्यन्नास्ति तन्नश्यति सैकधा मतिः ।
तयोर्विशेषं न विवेद्मि वादयोः पश्याम्यहोरात्रपरम्परा यतः ॥ ६ ॥
न तत्र पूर्वत्वपरत्वबाधः संभाव्यते यत्र परम्पराऽस्ति ।
नैवादिसर्गः क्वचिदस्ति तस्मादवान्तरे व्याहरते यथेच्छम् ॥ ७ ॥
यद्रूपमाविः प्रतिभाति तत् सत् तिरःस्थितं न प्रतिभात्यसत् सत् ।
सदेव यत्र प्रतिभातिरूपं तादृग्विधं तत् सदसत् तदासीत् ॥ ८ ॥
असद् यदासीन्निरुपाख्यमेतन्नासीत् सदेव त्विदमग्र आसीत् ।
सत्तावदेवैतदिहाग्र आसीत् सत् कारणं कार्य्यसतोऽन्यथासीत् ॥ ९ ॥

## विद्याविद्याधिकरणम् । ( वेदान्तमतेन )

( १ ) आसीदसत् प्रागिति योक्तिरस्याः संभाव्यते पञ्चविधोपपत्तिः ।
यद्विद्यमानं किमपीह तत् सत् तदन्यथारूपमथासदाहुः ॥ १० ॥
कार्य्याणि सन्त्यद्य ततोऽतिरिक्तं किमप्यकार्यं तदितोऽग्र आसीत् ।
यावन्ति रूपाणि तु सन्ति सृष्टौ तेभ्योऽन्यथारूपमिहाग्र आसीत् ॥ ११ ॥
( २ ) जगद् यथारूपमिदं विलोके तद्रूपवत् प्रागसदेतदासीत् ।
इत्थं न चासीदिति वक्तुमेव प्रवच्मि नूनं तदसत् तदासीत् ॥ १२ ॥
( ३ ) रूपं च रूपाश्रय इत्थमेतद् द्वयं तदस्तीह यदस्तिकिञ्चित् ।
यदस्तिरूपं न तदग्र आसीद् यदत्ररूप्यस्ति तदग्र आसीत् ॥ १३ ॥
( ४ ) य उद्भवेत् तं प्रवदन्ति भावं भावा इमे द्रव्यगुण क्रियाद्याः ।
यत्कर्म्म यद्रूपमिदं शरीरं ग्रामो भवन् भाव इहोदितः स्यात् ॥ १४ ॥

यत्कार्य्यपर्य्यायविभिन्नरूपं शश्वत्स्थितं यत्र लिनाति कार्य्यम् ।
नोत्पाद्यते तन्नभवन् स भावस्तस्मादभावं तमिह ब्रवीमि ॥ १५ ॥
यदाह नास्तीति स नूनमत्राभिप्रैति कार्य्यस्थितिविप्रबाधम् ।
तस्मादकार्यस्थितिमत्तु तत्त्वं निःशेषकार्य्योप्ययनादभावः ॥ १६ ॥
सद्भावमाहासदभावमाहासदादितत्त्वं सदिदं तु कार्य्यम् ।
कथं नु सत् कार्य्यमिदं पुरा स्यादसत्तु तस्मादिदमग्र आसीत् ॥ १७ ।
( ५ ) नाम्ना च रूपेण च कर्म्मणा च सर्वं जगद् व्याकृतमस्ति तत् सत् ।
※ न यस्य तु व्याकरणं कृतं स्यादव्याकृतं रूपमसत् तदुक्तम् ॥ १८ ॥
अव्याकृताद् व्याकृतरूपमेतत् सर्वं प्रजज्ञे तदिति प्रवक्तृम् ।
बृहस्पतिर्लोकस्तुतः स ऊचे पुराऽसतो वै सदजायतेति ॥ १९ ॥

इति मधुसूदनविद्यावाचस्पतिप्रणीते ब्रह्मविज्ञानशास्त्रे
सामञ्जस्यवादविकल्पः संपूर्णः ।

इति सदसद्वादस्य षष्ठं प्रस्थानं सामञ्जस्यवादाख्यम् ॥ ६ ॥

## अथ सदसद्वादे—अव्यक्ताक्षरविकल्पे—

### १—सौगतमतं वैनाशिकम् ।

१ पुरासमाजे विदुषां जगत्स्थितौ तर्कक्रमे विप्रतिपत्तयस्त्रिधा ।
ताथागताश्चौपनिषत्परा इमे त्वद्वैतिनो द्वैतिन एव कापिलाः ॥ १ ॥
रसोबलं वा जगतोऽस्ति बीजं किमात्मकं विश्वमिदं विभाति ।
इत्थं विचारे बल एव केचित्केऽपि द्वये केऽपि रसे वदन्ते ॥ २ ॥

२ बीजं बलं नैव रसो रसो वा नास्त्येव सर्वस्य बलात्मकत्वात् ।
बले बलं तत्र बलं पुनर्वा संतानतः सर्वमिदं प्रजज्ञे ॥ ३ ॥
यज्ज्ञानमाहुः पृथगत्र पूरुषं तत्कर्म नास्तीति मतं त्वलौकिकम् ।
जडाश्च कर्म्माणि जडेषु कर्मणा कर्मैव विज्ञानमुदेति नेतरत् ॥ ४ ॥
प्रतिक्षणान्यान्यगतिस्वभावतः सर्वं त्वसद्वस्तु न किञ्चन ध्रुवम् ।
प्रतीयते यद्ध्रुवमत्र तद्ध्रुवं संतानमूलं भ्रममात्रमिष्यते ॥ ५ ॥
इत्येवमाहुर्बलपक्षपातिनः केऽप्यत्र कर्म्माद्वयवादिनो बुधाः ।
वैनाशिकास्ते सुगतादि तन्मते निरात्मकं विश्वमिदं न सत् क्वचित् ॥ ६ ॥
इत्यसत् पक्षः ॥ ११ ॥

### २—कापिलमतं प्राधानिकम् ।

१ यदस्ति किञ्चित् तदिदं समस्तं व्यक्तं तदव्यक्तमिति द्विधास्ति ।
अव्यक्तमासीत् स्वत एव पश्चाद् व्यक्तं तदव्यक्तमतः परं स्यात् ॥ ७ ॥
नापूर्वमेषां किमपीह जायते नासत् कदाचित् सदिति प्रतीयताम् ।
यदस्ति किञ्चित्तदिदं ध्रुवं सदा सदेवनासद् यदसन्नतद्भवेत् ॥ ८ ॥
अचेतनं सर्वमिदं क्रमेण तु प्रादुर्भवत् स्थौल्यमितं विकाशते ।
यावन्ति रूपाणि तु शक्तिरूपतो गूढानि तावन्ति भवन्ति नाधिकम् ॥ ९ ॥
सर्वाणि रूपाणि पुनः क्रमात् स्वतः सौक्ष्म्यं गतं तत्र तिरोभवन्ति हि ।
एष स्वभावो न तु तत्प्रयोजकः कश्चित्परो भिन्नविधोऽत्र दृश्यते ॥ १० ॥
उक्तं यदव्यक्तमिदं तदेकं स्वतन्त्रमेतज्जनयत्यशेषम् ।
नापेक्षते त्वात्मरसं विसृष्टावसङ्गिनं कापिलदृष्टिरेषा ॥ ११ ॥

२ यत्त्वत्रचैतन्यमिदं न कर्म न कर्मणा क्षुभ्यति नो कनीयः ।
दिग्देशकालादिमितिर्न तस्मिन्नस्त्येव तन्नो सृजतीह किञ्चित् ॥ १२ ॥
अव्यक्ततोऽन्यः पुरुषः स आत्मा पृथक् विधोस्त्यक्रियनिर्विकारः ।
सचेतनोऽव्यक्तजडस्थितः सन् भोक्ता न कर्ता कपिलोक्तिरेषा ॥ १३ ॥

३ क्षेत्रज्ञमात्मानमिमं वदामि क्षेत्रं शरीरं स शरीरभेदात् ।
भिन्नो निजंत्वेव शरीरमेषोऽभिमन्यते नैष पराभिमानी ॥ १४ ॥
पुत्रेऽपि मित्रेऽपि कदाचिदेषोऽभिमन्यते यत्त्वहमस्मि चेति ।
तत्कल्पनामात्रमयं न विद्यात् तद्देहपीडां स न वाक्ति यावत् ॥ १५ ॥
पीडां तदुक्तामपि नैष आत्माऽभिमन्यते साक्षितया कदाचित् ।

तस्मादनन्ताः प्रतिदेहाः ॥ १६ ॥

४ अव्यक्तमेवात्मनि सज्ज्य ।
अन्योन्यभावा अविविक्त धारिता भवन्ति ... मुच्य जगत् ॥१७॥
तयोर्विवेकेन यदा यमात्मा देहाभिमानेन विहीयतेऽलम् ।
प्रधानधर्म्मा इह सन्त एवाव्यक्तानि वृत्ता इह सास्य मुक्तिः ॥ १८ ॥
यद्यप्ययं नित्यविमुक्त आत्मा न बध्यते सङ्गवशाद्धि बन्धः ।
ज्ञानं त्वसङ्गं विषयेषु दृष्टं प्रधानमुक्तेस्त्विह मुक्तिशब्दः ॥ १९ ॥

५ यः प्रत्ययो या प्रकृतिस्तदेतौ भिन्नौ भवेतां हि पृथक् स्वभावौ ।
यतोऽस्यसत्ता प्रकृतिर्मतोऽसौ स प्रत्ययो येन तु भातिरस्य ॥ २० ॥
प्रधानरूपा प्रकृतिर्हि यस्य क्षेत्रज्ञ आत्मासनतद्विकाराः ।
विकारतो यस्यतु सृष्टिरेषा बीजं तदव्यक्तमिहाक्षरं स्यात् ॥ २१ ॥
यदक्षरात् सर्वविधार्थसृष्टीः प्राङ् मुण्डकादिश्रुतिभिः शृणोमि ।
प्रधानतोऽव्यक्त एव विद्यात् ता अक्षरात् पूरुषतस्तु न स्युः ॥ २२ ॥
इत्थं प्रधानाभिधतो बलात् परं विभ्रस्तमात्माख्यरसं पृथक्तया ।
मन्ये तु बीजं न रसं तथाविधं न पूरुषाणामपि जाति भिन्नताम् ॥ २३ ॥

६ दृढं मतं तावदिदं हि कापिलं सांख्यं तु विज्ञानमिदं प्रचक्षते ।
रसं पृथक् स्वीकुरुते बलादयं न कारणत्वं वदतीति भिन्नता ॥ २४ ॥
इत्येवमत्रोभयपक्षपातिनो रसाद्बलं द्वैतिन उद्धरन्त्यमी ।
प्राधानिकास्ते कपिला हि तन्मते द्वैतात्मकं विश्वमिदं सदप्यसत् ॥ २५ ॥

## ३—बादरायणमतं शारीरकम् ।

१ परोवरीणैकरसप्रवीणो द्वैपायनः कृष्ण इहान्यथाह ।
प्रधानमव्यक्तमिदं न बीजं बीजं तदव्यक्तमिहाक्षरं यत् ॥ २६ ॥
यदुक्तमव्यक्तममुष्य पुंसः शक्तिस्ततोऽन्योऽपि पृथङ् निरुक्तः ।
अव्यक्तसंज्ञः पुरुषः स आत्मा सनातनो निष्क्रियनिर्विकारः ॥ २७ ॥
सोऽव्यक्त आत्माऽक्षर इत्युदीरितो नश्यत्सु भूतेष्वपि नैव नश्यति ।
परागतिः सा परमं च धाम तन्निवर्तते प्राप्य न तं कश्चित्पुनः ॥ २८ ॥

२ क्षेत्रज्ञनाम्नः पुरुषान् बहूनिमानेके विदुः किन्त्वपरान्न चक्षते ।
अव्यक्तमेषु प्रकृतिस्ततो भवन् व्यक्तानि भूतानि भवन्ति नात्मनः ॥ २९ ॥

३ वयं तु विद्मः पुरुषत्रयं पृथक् क्षराक्षरा उत्तमपूरुषं तथा ।
क्षरोऽवरोऽयं पर उत्तमोऽव्ययः परावरस्त्वक्षर एष मध्यमः ॥ ३० ॥
यद् यौगिकं मौलिकयोगक्लृप्तं योगात्यये नश्यति तद्विरूपम् ।
तच्च द्विधा मौलिकमिश्रणं चापूर्वान्यरूपोदयनात्मकं च ॥ ३१ ॥
अपूर्वमन्यत् क्षरमेतदाहुर्यन्मिश्रणं केवलमक्षरं तत् ।
अनन्ययुक्तं तु विशुद्धरूपं यन्मौलिकं स्यात् परमव्ययं तत् ॥ ३२ ॥
भूतात्मसंज्ञः क्षर एष कार्यवत् त्रिधैष वैश्वानर एष तैजसः ।
प्रज्ञश्च सर्वे स्फुटसंज्ञके स्थिता, द्वौ गूढसंज्ञे, प्रथमस्त्वसंज्ञके ॥ ३३ ॥

कूटस्थ आत्माऽक्षरसंज्ञको यस्तत्कारणं सर्वमिदं ततोऽभूत् ।
क्षेत्रज्ञ एवं समष्टिस्तथान्तर्यामी त्रिधाऽप्यन्वित एक एव ॥ ३४ ॥
महानयं चन्द्ररसो रवे रसः क्षेत्रज्ञ एतत्कृन्चित् परोरसः ।
भिन्ना अमी स्वानुगमादनन्यवत् स्थिताः स एषोऽक्षर एक उच्यते ॥३५॥
सदैव गच्छन्नपि नैव बध्यते न कर्मणा लिप्यत एव केनचित् ।
न सज्ज्यते न व्यथते न रिष्यति प्रत्येति कूटस्थमिमं ततोऽक्षरम् ॥ ३६ ॥
भूतात्मसंज्ञोऽस्ति यथा प्रकाशो नायं प्रकाशोऽस्ति तथाऽक्षरात्मा ।
व्यक्तास्ततो मूर्तय उद्भियन्ते तेनैनमव्यक्तमपि ब्रुवन्ति ॥ ३७ ॥
त्रैलोक्यतो यद्बहिरस्ति किञ्चिज्ज्योतिःपरंधाम परः स आत्मा ।
आविश्य लोकत्रयमेव विश्वं बिभर्ति विष्णुः पुरुषोत्तमं तम् ॥ ३८ ॥
सत्यस्य सत्यः स हि सूत्ररूपस्तमेकमात्मानमहं वदामि ।
सर्वाणि भूतानि वसन्ति तस्मिन् सर्वेषु भूतेष्वपि वा यमात्मा ॥ ३९ ॥
भूतानि सर्वात्मतयैव तस्मिन् स्थानं ह्यनन्तायतने लभन्ते ।
व्याप्तोपि भूतेषु न चैव सर्वात्मना परिच्छिद्य पृथक् स्थितः स्यात् ॥ ४०
तस्मात् स आत्मा वदति स्वमर्थं सर्वाणि भूतानि मयि स्थितानि ।
नावस्थितस्तेष्वहमस्मि किन्तु भूतान्यसङ्गेन मयि स्थितानि ॥ ४१ ॥
आनन्दविज्ञानघनः स सत्ता मनोऽप्यकर्माऽप्यत एव विद्या ।
ततस्तु संभूतमिदं ह्यविद्याकर्मासदज्ञानमयं च दुःखम् ॥ ४२ ॥
मर्त्यश्च कार्यश्च स भौतिकात्मा तत्रामृतं कारणमक्षरात्मा ।
न यस्तु कार्यं न च कारणं वा स केवलोऽयं पुरुषोत्तमोऽस्ति ॥ ४३ ॥

४ यथा तु सांख्यैः पुरुषस्वरूपं प्रोक्तं पृथक् कारणकार्यरूपात् ।
परात्मनस्तत्पुरुषस्य विद्यात् क्षेत्रज्ञरूपं तु न कारणत्वात् ॥ ४४ ॥
बहुत्वमेतस्य न चास्ति किन्त्वसावेकोऽयमात्मोर्ध्वमधस्तिरोऽखिलम् ।
एतां त्रिलोकीं परितस्ततो बहिर्व्याप्य स्थितोऽनन्त इति प्रचक्ष्महे ॥४५॥

५ येषां बहुत्वं तु शरीरभेदान्निरुक्तमेषोऽस्त्ययमक्षरात्मा ।
एकोऽप्यनेकः स उपाधिभेदाद् भूतात्मसंज्ञा बहवः स्वतः स्युः ॥ ४६ ॥
सितासितैः कर्मफलैः स एवाभिभूयते प्रकृतमोऽयमात्मा ।
स जायते स म्रियते स लोकाल्लोकान्तरं धावति कर्मवश्यः ॥ ४७ ॥
हृद्ग्रन्थिरेषोऽस्ति हि कर्मबन्धतो व्यानेऽत्र यावत् स्पृदपानयोर्दृढः ।
तावन्न वैश्वानर एव नश्यति प्रेत्येव भूतानुशयीपराः क्षितीः ॥ ४८ ॥
स एवमुक्तिं लभते स यावन्न मुच्यते संसरतीह तावत् ।
पञ्चत्वमायान्ति तदङ्गभूतान्यथाप्ययन्ते दिवि देहि देवाः ॥ ४९ ॥
भूतात्मनः स्याद्गतिरक्षरात्मज्ञानात् सलोकेषु भवेत्स्वतन्त्रः ।
श्रेयस्ततोऽप्यव्ययमेव पश्येद् ब्रह्मैव सद् ब्रह्मविदेव भाति ॥ ५० ॥
दैवेषु लोकेषु गतिर्गतिः स्यात् परागतिस्त्वक्षरभावसिद्धिः ।
अनुत्तमात्वस्य गतिर्यदार्यं विद्यात्कथंचित्पुरुषोत्तमं तम् ॥ ५१ ॥
६ क्षेत्रज्ञ आत्मा महति स्वयोनौ धत्ते रसं तेन दधाति गर्भम् ।

महानयं तेन भवन्त्यसंख्या या मूर्तयश्चैएत आसुभूतम् ॥ ५२
सर्वासु योनिष्वपि मूर्त्तयो यास्तासां महानेव हि मुख्ययोनिः ।
बीजप्रदस्तत्र पितेव चलसः क्षेत्रज्ञ आत्मेति वदन्ति वृद्धाः ॥ ५३ ॥

७ यः प्रत्ययो या प्रकृतिस्तदेतौ भिन्नौ भवेतामपि नानपेक्षौ ।
न प्रत्ययश्चेदिह युज्यते चेत् तत्तत्स्वरूपं प्रकृतेर्न सिद्ध्येत् ॥ ५४ ॥
भूतात्मनः कर्म यथा तथास्मिन् भवन्ति कामा महतो रसेन ।
श्रद्धा हि कामस्तत एव सद्यः कामानुरूपा महतोऽस्ति मूर्तिः ॥ ५५ ॥
यथान्तरे मूर्तिरुदेति तद्वद् भूतानि सज्ज्यन्त इहानुरूप्यात् ।
मूर्तिर्हि पात्रं निहितानि तस्मिन् भूतानि दृश्यन्त इदं शरीरम् ॥ ५६ ॥
भूतेषु वैश्वानरतैजसाद्या भूताभिमानेन पृथक्स्थिताः स्युः ।
तदन्तरे या त्विह योनिमूर्तिस्तामध्यतिष्ठत् पृथगक्षरः सः ॥ ५७ ॥

८ "अदृश्यमग्राह्यमगोत्रवर्णमचक्षुःश्रोत्रं तमपाणिपादम् ।
नित्यं विभुं सर्वगतिं सुसूक्ष्मं तमव्ययं पश्यति भूतयोनिम्" ॥ ५८ ॥
"यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति ।
यथासतः पुरुषात् केशलोमानि तथाक्षरात् संभवतीह विश्वम्" ॥ ५९ ॥
"यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः ।
तथाक्षराद् विविधाः सौम्यभावाः प्रजायन्ते तत्र चैवापियन्ति ॥ ६० ॥
अर्चिष्मद् यद् यदणुभ्योऽप्यणीयो यस्मिन्लोका निहिता लोकिनश्च ।
तद्वै प्राणो वाङ्मनश्चामृतं चोपास्यं सत्यं मन्महे चाक्षरं तत् ॥ ६१ ॥
"यदक्षरं वेदविदो वदन्ति विशन्ति यद् यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये" ॥ ६२ ॥

९ अहं त्वहः स्यां क्रमशस्तदौ स्यादव्यक्तमोमक्षरमेव गम्यम् ।
ओंकार एव प्रभवः प्रतिष्ठा परायणं सा परमा गतिर्नः ॥ ६३ ॥
येनाखिलं विश्वमिदं ततं तथा स्थितानि भूतान्यखिलानि यत्र वा ।
परः स आत्मा स परोऽक्षरादपि प्रमाणमेतन्न ततः परं विदुः ॥ ६४ ॥

१० इत्येवमेके रसपक्षपातिनो ब्रह्माद्वयं केवलमत्र मन्वते ।
शारीरका वेदविदोऽवधार्य्यैते ब्रह्मैव सद् विश्वमिदं प्रचक्षते ॥ ६५ ॥
कृष्णादयो वा कपिलादयो वा यथाहुरेते सुगतादयो वा ।
मतत्रयं यत्र समीक्ष्य विज्ञः पश्यन्ति कृष्णादय एव सत्यम् ॥ ६६ ॥
न साधु तेषां सुगता वदन्ति न साधु पश्यन्ति च कापिलास्ते ।
परोऽव्ययश्चेन्न रसं प्रदद्यादसत्कथं सद्भिभूतं स्फुटं स्यात् ॥ ६७ ॥

इति सदसद्वादस्याव्यक्ताक्षरविकल्पे मतत्रयवादाः पूर्णाः ।

इति सदसद्वादस्य सप्तमं प्रस्थानमव्यक्ताक्षरवादाख्यं संपूर्णम् ॥ ७ ॥

# सदसद्भिन्नकारणताप्रतिवादः ।

"ब्रह्म जज्ञानं, प्रथमं पुरस्ताद् विसीमतः सुरुचो वेन आवः ।
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः" ॥ १ ॥

इत्थं महर्षिर्नकुलो निरुक्ते यं वामदेवस्य सुतोऽथवा यम् ।
चत्वार ऊचेऽथ बृहस्पतिर्वा निर्धार्यते सूर्यपरः स मन्त्रः ॥ २ ॥
रयिश्च विज्ञानघनः, स उद्यन् प्राच्यां समन्ताद् वितनोति रश्मीन् ।
सर्वस्य चास्य प्रभृतौ निवृत्तौ मार्गे विधाने व्यवृणोद् ध्रियः सः ॥ ३ ॥
स्थूलस्य सूक्ष्मस्य च विद्यमानस्याविद्यमानस्य च योनिमवयत् ।
प्रत्नेप सूर्योऽस्त्यवरः स पिण्डः सोऽर्चाग्निविरूपैः प्रभवोऽवधेयः ॥ ४ ॥

# उपसंहारः ।

यो जन्म लेभे मिथिलासु गाढाग्रामेऽथ मत्स्यानुपसद्य देशान् ।
श्रीमाधवान्मत्स्यमहीमहेशान्मानं सुखं जीवनमप्यवाप्नोत् ॥ १
यश्चेतिहासस्तुतिभिः स सर्वान् विज्ञानतश्च प्रविभज्य वेदान् ।
विज्ञानभेदान् दश देवलोके पुरा प्रसिद्धान् यततेऽभिनेतुम् ॥ २ ॥
निर्म्माति भागैर्दशभिः स विद्यावाचस्पतिः श्रीमधुसूदनाख्यः ।
यं ब्रह्मविज्ञाननिबन्धमेतं तस्मिन् समाप्तः सदसद्विभागः ॥ ३ ॥
संप्रत्ययोऽथ प्रकृतिस्तदेकात्मताऽभिकार्य्यं च गुणत्रयं च ।
समञ्जसं चाक्षरभाव इत्थं भवन्त्यमी सप्तपृथग् विमर्शाः ॥ ४ ॥
प्रत्येकमेतेषु पुनर्भवन्ति मथो विकल्पाः सदसत् समस्तैः ।
तेऽमी विमर्शा अथ तद्विकल्पैकविंशतिर्वा सदसत् प्रवादः ॥ ५ ॥
यत्र प्रदर्श्या विषयाः पुरातना यत्र प्रकारोऽभिनवः प्रदर्शने ।
यत्र प्रमाणं श्रुतयोऽथ युक्तयो ममेति विज्ञानमिदं विमृश्यताम् ॥ ६ ॥

इति मधुसूदनविद्यावाचस्पतिप्रणीते ब्रह्मविज्ञानशास्त्रे सदसद्वादः समाप्तः ।